-: अथ :-

।। श्रीगणपतिर्जयति ।।

# श्रीरामार्चनकौमुदी

(श्रीसुरभिग्रन्थमालाया दशमपुष्पम्)

श्रीभगवदर्चकः

वेदाद्यनेकविषयाचार्यः

**पण्डितगङ्गाधरपाठकमैथिलः**

।। त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये ।।

सम्पादकः

प्रकाशकः

-: श्रीसीताराम :-

# श्रीरामार्चनकौमुदी

## -: विषयानुक्रमणिका :-



### --: श्रीगणेशाय नम: :--

(श्रीरामरहस्योपनिषदि ''हनूमान्होवाच- वायुपुत्रं विघ्नेशं वाणीं दुर्गां क्षेत्रपालकं सूर्यं चन्द्रं नारायणं नारसिंहं वायुदेवं वाराहं तत्सर्वान्समात्रान्सीतां लक्ष्मणं शत्रुघ्नं भरतं विभीषणं सुग्रीवमङ्गदं जाम्बवन्तं प्रणवमेतानि रामस्याङ्गानि जानीथा: । तान्यङ्गानि विना रामो विघ्नकरो भवति ॥'' अत: साङ्गं श्रीरामं पूजयेत् ।)

॥ श्रीरामश्शरणम्मम ॥

# ॥ अथ श्रीरामार्चनकौमुदी ॥

श्रीगणेशं दिनेशं च देवकालीं शिवं गुरुम् ।
श्रीराममसकृन्नत्वा श्रीरामार्चनमारभे ॥१॥
धर्मसंस्कृतिरक्षायै जगन्मङ्गलहेतवे ।
श्रीरामप्रीतये कुर्वे श्रीरामार्चनकौमुदीम् ॥२॥

श्रीमत्कुलेष्टदेवतानुकम्पया श्रीरामरहस्योपनिषच्छ्रीरामतापनीयोपनिषदानन्दवनीय-रामार्चनचन्द्रिकागस्त्यसंहितारामानन्दीयरामार्चनपद्धतिकरपात्रिकृतरामोपासनादिकमाप्रेड्य नातिन्यूनविस्तृतश्रीरामार्चनकौमुदी क्रियते । तत्र कृतमङ्गलस्नानः पूजनकर्ता सशिखयज्ञोपवीती द्विजयजमानः (सपत्नीकः) अहते वाससी परिधाय नित्यकर्म विधाय पूजोपयोगिसम्भारान् गृहीत्वा गां प्रणम्य पूजयित्वा प्रदक्षिणीकृत्य पञ्चगव्यं कृत्वा प्राश्य पूजास्थले पूजासामग्रीषु च तत्सम्प्रोक्ष्य शुभासने प्राङ्मुख उदङ्मुखो देवसम्मुखो वोपविश्य (स्वदक्षिणपार्श्वे पत्नीं चोपवेश्य) हस्ते दक्षिणाक्षतताम्बूलफलानि गृहीत्वा विप्रगुर्वादिवन्दनं कुर्यात् । (शिखासूत्रहीनैर्यजमानैः वेदप्रणववर्ज्यैस्तन्त्रपौराणिकमूलमन्त्रैरेवास्पर्शपूजा कर्त्तव्येति सिद्धान्तः ।)

॥ श्रीराम जय राम जय जय राम ॥

धर्माय धर्मशास्त्राय धर्मज्ञाय महात्मने ।
गोविप्रधर्मपादाय नित्यमेव नमो नमः ॥१॥
मिथिलां मैथिलीं राममयोध्यां च प्रसूं पितॄन् ।
श्रीमद्गङ्गेशमिश्रादिगुरून्नौमि निरन्तरम् ॥२॥

आसनशोधनम् । भूमौ दक्षिणहस्तमुत्तानं निवेश्य- ॐ मही द्द्यौः प्पृथिवी च नऽइमँय्यज्ञं मिमिक्क्षताम् । पिपृतान्नो भरीमभिः ॥ ॐ आसनाधारशक्त्यै नमः, ॐ कूर्मानन्तवराहदेवताभ्यो नमः' इति भूम्यादीन् सम्पूज्य 'पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् ॥' इत्यनेनासनशोधनं विधाय 'ॐ आसनाधिष्ठातृदेवताभ्यो नमः' इति सम्पूज्य प्रार्थयेत्- त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता । उद्धृताऽसि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ ॐ भूम्यादिदेवताभ्यो नमः प्रार्थनां समर्पयामि ॥ जलमादाय- अनेन पूजनेन भूम्यादिदेवताः प्रीयन्तां न मम ।

शिखाबन्धनम्- ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्श्वेषु रीरिषः । मा नो व्वीरान्रुद्द्र भामिनो व्वधीर्हविष्मन्तः

सदमित्त्वा हवामहे ॥ चिद्रूपिणि महामाये दिव्यतेज:समन्विते । तिष्ठ देवि शिखाबन्धे तेजोवृद्धिं कुरुष्व मे ॥ इति मन्त्रेण दक्षिणपार्श्वे शिखां बध्नीयात् ।

**कुशपवित्रधारणम्-** ॐ पवित्रे स्थो व्वैष्णव्व्यौ सवितुर्व्व: प्प्रसवऽउत्पुनाम्म्यच्छिद्द्रेण पवित्रेण सूर्य्यस्य रश्मिभि: । तस्य ते पवित्रपते पवित्रपूतस्य यत्काम: पुने तच्छकेयम् ॥ इत्यनेन सव्यहस्ते कुशत्रयं दक्षिणहस्ते कुशद्वयं च धारयेत् ।

**पवित्रीकरणम्-** ॐ पुनन्तु मा देवजना: पुनन्तु मनसा धिय: । पुनन्तु व्विश्श्वा भूतानि जातवेद: पुनीहि मा ॥ अपवित्र: पवित्रो वा सर्वावस्थां गतोऽपि वा । य: स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तर: शुचि: ॥ ॐ पुण्डरीकाक्ष: पुनातु ३ ॥ इति जलेनात्मानं पूजासामग्रीं च सिञ्चेत् । पुनराचम्य प्राणायामत्रयं कुर्यात् ।

**आचमनम्-** रां रामाय नम: आत्मतत्त्वं शोधयामि नम: स्वाहा । रां रामाय नम: विद्यातत्त्वं शोधयामि नम: स्वाहा । रां रामाय नम: शिवतत्त्वं शोधयामि नम: स्वाहा ॥ इति वामहस्तस्पृष्टेन कनिष्ठांगुष्ठपृथक्कृतेन गोकर्णाकृतिदक्षिणहस्तचुलुकेनाचमनं कृत्वा हस्तौ प्रक्षाल्य प्राणायामान् कुर्यात् ।

**प्राणायामा:** । तत्रादौ पूरकेऽंगुष्ठेन दक्षिणनासापुटपीडनपूर्वकं विष्णुं ध्यायेत्- ''रां रामाय नम:'' पुनरनेनैव मन्त्रेण कुम्भके सर्वांगुलीभि: (कनिष्ठिकाऽनामिकाभ्यां वा) वामनासापुटपीडनपूर्वकं मनसा ब्रह्माणं ध्यायेत्ततोऽनेनैव रुद्रं ध्यायन् दक्षिणनासापुटेन रेचनं कुर्यात् । इति क्रमेण त्रिवारं प्राणानायम्य भगवन्तं श्रीरामं स्मृत्वा ब्राह्मणद्वारा यजमान: स्वललाटे तिलकं कुर्यात् ।

**तिलककरणम्-** ॐ भद्द्रं कर्ण्णेभि: श्शृणुयाम देवा भद्द्रं पश्श्येमाक्षभिर्य्यजत्रा: । स्थिरैरङ्गैस्तुष्टुवाग्गुँसस्तनूभिर्व्व्यशेमहि देवहितँय्यदायु: ॥ तिलकं वन्द्यते नित्यं पवित्रं पापनाशनम् । आपदां हरते नित्यं लक्ष्मीर्वसतु सर्वदा ॥ इति मध्यमया यजमानस्य (दम्पत्योर्वा) भाले कुंकुमादिना तिलकं कुर्यादक्षतांश्च दद्यात् ।

**तुलसीमालाधारणम्** । तद्यथा- सुपरिष्कृतां प्रक्षालितां मालां पात्रे निधाय 'ॐ तुलस्यै नम:' इति तुलसीं प्रणम्य मालां ध्यायेत्- 'ध्यायेच्च तुलसीमालां रामां कमललोचनाम् । प्रसन्नां पद्मवदनां वराभयचतुर्भुजाम् ॥' इति ध्यात्वाऽऽवाहयेत्- 'ॐ भूर्भुव: स्व: सर्वशक्तिस्वरूपिणि भगवत्प्रसादिके सिद्धिदात्रि भगवति तुलसीमालिके इहागच्छ इह तिष्ठ' इत्यावाह्य 'ॐ भूर्भुव: स्व: सर्वशक्तिस्वरूपिण्यै

भगवत्प्रसादिकायै सिद्धिदात्र्यै भगवत्यै तुलसीमालिकायै नमः' इति सम्पूज्य प्रार्थयेत्- सौभाग्यं सन्ततिं देहि धनं धान्यं च मे सदा । आरोग्यं शोकशमनं कुरु मे माधवप्रिये ।। देवैस्त्वं निर्मिता पूर्वमर्चिताऽसि मुनीश्वरैः । सर्वाभीष्टार्थसिद्ध्यर्थं भक्तिं देहि हरिप्रिये ।। इति सम्प्रार्थ्य 'ॐ सिद्धिदायिन्यै नमः' इति दक्षिणहस्ते गृहीत्वाऽष्टोत्तरशतं श्रीराममनुं जपित्वा 'मातर्माले महामाये सर्वशक्तिस्वरूपिणि । चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।।' इति कण्ठे धारयेत् ।

नूतनयज्ञोपवीतधारणम् । यज्ञोपवीतद्वयं प्रक्षाल्य सङ्कल्पयेत्- ॐ अद्य नूतनयज्ञोपवीतधारणं करिष्ये । ततो गन्धादिभिः- 'ॐ भूर्भुवः स्वः यज्ञोपवीताधिष्ठातृदेवताभ्यो नमः आवाहयामि पूजयामि' इति यज्ञोपवीतद्वयं सम्पूज्य करसम्पुटे धृत्वा दशगायत्रीमन्त्रैरभिमन्त्रयेत् । विनियोगः- यज्ञोपवीतमिति परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः लिङ्गोक्ता देवता मम श्रौतस्मार्त्तकर्मानुष्ठानसिद्ध्यर्थं नूतनयज्ञोपवीतधारणे विनियोगः । तदनन्तरम्- ॐ यज्ज्ञोपवीतं परमं पवित्रं प्प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुब्भ्रँय्यज्ज्ञोपवीतं बलमस्तु तेजः ।। ॐ यज्ज्ञोपवीतमसि यज्ज्ञस्य त्वा यज्ज्ञोपवीतेनोपनह्यामि ।। इति मन्त्रौ पठित्वा पृथक्-पृथक् यज्ञोपवीतद्वयं दक्षिणहस्तद्वारा धारयेत् । प्रतियज्ञोपवीतधारणान्ते आचमनम् । ततो जीर्णयज्ञोपवीतत्यागः- ॐ एतावद्दिनपर्यन्तं ब्रह्म त्वं धारितं मया । जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ।। पश्चाद्यथाशक्ति गायत्रीमन्त्रं जपेत् । अर्पणम्- अनेन नूतनयज्ञोपवीतधारणाङ्गगायत्रीमन्त्रजपकर्मणा भगवान् श्रीपरमेश्वरः प्रीयतां न मम ।

स्वस्तिवाचनम्- ॐ आ नो भद्द्राः क्क्रतवो यन्तु व्विश्श्वतोऽदब्धासोऽ अपरीतासऽ उद्द्भिदः । देवा नो यथा सदमिद्वृधेऽअसन्नप्प्रायुवो रक्क्षितारो दिवेदिवे ।।१।। देवानाम्भद्द्रा सुमतिर्र्ऋजूयतान्देवानाग्गुँरातिरभि नो निवर्त्तताम् । देवानाग्गुँसक्ख्यमुपसेदिमा व्वयन्देवा नऽआयुः प्प्रतिरन्तु जीवसे ।।२।। तान्पूर्व्वया निविदा हूमहे व्वयम्भगम्मित्रमदितिं दक्क्षमस्रिधम् । अर्य्यमणं व्वरुणग्गुंसोममश्श्विना सरस्वती नः सुभगा मयस्क्करत् ।।३।। तन्नो व्वातो मयोभु व्वातु भेषजन्तन्माता पृथिवी तत्पिता द्द्यौः । तद्द्ग्रावाणः सोमसुतो मयोभुवस्तदश्श्विना श्शृणुतन्धिष्ण्या युवम् ।।४।। तमीशानञ्जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे व्वयम् । पूषा नो यथा व्वेदसामसद्द्वृधे रक्क्षिता पायुरदब्धः स्वस्तये ।।५।। स्वस्ति नऽइन्द्रो

व्वृद्धश्श्रवाः स्वस्ति नः पूषा व्विश्श्ववेदाः । स्वस्ति नस्ताक्क्ष्र्योऽअरिष्टनेमिः स्वस्ति नो बृहस्प्पतिर्द्दधातु ॥६॥ पृषदश्श्वा मरुतः पृश्निन्नमातरः शुभँय्यावानो व्विदथेषु जग्ग्मयः । अग्ग्निजिह्व्वा मनवः सूरचक्क्षसो व्विश्श्वे नो देवाऽअवसा गमन्निह ॥७॥ भद्द्रं कर्ण्णेभिः श्शृणुयाम देवा भद्द्रं पश्श्येमाक्क्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्ट्टुवाग्गुँसस्तनूभिर्व्व्यशेमहि देवहितँय्यदायुः ॥८॥ शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्च्चक्क्रा जरसन्तनूनाम् । पुत्त्रासो यत्र पितरो भवन्ति मा नो मद्ध्या रीरिषतायुर्ग्गन्तोः ॥९॥ अदितिर्द्द्यौरदितिरन्तरिक्क्षमदितिर्म्माता स पिता स पुत्त्रः । व्विश्श्वे देवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्त्वम् ॥१०॥ द्यौः शान्तिरन्तरिक्क्षग्गूंशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्प्पतयः शान्तिर्व्विश्श्वे देवाः शान्तिर्ब्ब्रह्म्म शान्तिः सर्व्वग्गूंशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥११॥ ॐ यतो यतः समीहसे ततो नोऽअभयङ्कुरु । शन्नः कुरु प्प्रजाब्भ्योऽभयन्नः पशुब्भ्यः ॥१२॥ ॐ गणानान्त्वा गणपतिग्गूं हवामहे प्प्रियाणान्त्वा प्प्रियपतिग्गूं हवामहे निधीनान्त्वा निधिपतिग्गूं हवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्त्वमजासि गर्ब्भधम् ॥१३॥ ॐ अम्बेऽ अम्बिकेऽम्बालिके न मा नयति कश्च्चन । ससस्त्यश्श्वकः सुभद्द्रिकाङ्काम्पीलवासिनीम् ॥१४॥ सुशान्तिर्भवतु । सर्वारिष्टशान्तिर्भवतु । अयमारम्भः शुभाय भवतु । अमृतारम्भो भवतु । ॐ देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्व ॥

ॐ श्रीमन्महागणाधिपतये नमः । ॐ लक्ष्मीनारायणाभ्यां नमः । ॐ उमामहेश्वराभ्यां नमः । ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ शचीपुरन्दराभ्यां नमः । ॐ मातापितृचरणकमलेभ्यो नमः । ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ श्रीसुरभिदेव्यै नमः । ॐ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्यो नमः । ॐ श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेताय श्रीरामचन्द्राय नमः । ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वाभ्यो देवीभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः । ॐ एतत्कर्मप्रधानदेवताभ्यो नमः । ॐ सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः ॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥१॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥२॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥३॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥४॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥५॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥६॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥७॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥८॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥९॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥१०॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥११॥ स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥१२॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥१३॥ विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् । वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥१४॥ वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥१५॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥१६॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्यऽएव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥१७॥ अयोध्यां मिथिलां काशीं हरिद्वारं सरिद्वराम् । वृन्दावनं चित्रकूटं ध्यात्वा कर्म समारभे ॥१८॥ इति पठित्वा श्रीविष्णुं प्रणमेत् ।

**श्रीविष्णुस्मरणम्-** ॐ विष्णवे नमः । ॐ विष्णवे नमः । ॐ विष्णवे नमः । भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे कर्णावाशा शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः । अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैश्चित्रं रं रम्यतेऽजं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ इति श्रीविष्णुं प्रणम्य सङ्कल्पयेत् ।

**सङ्कल्पः** । हस्ते त्रिकुशजलादीन्यादाय- ॐ स्वस्ति श्रीसच्चिदानन्दपरब्रह्मणः अचिन्त्यानन्तशक्तेः विष्णोराज्ञया प्रवर्तमानस्याद्य श्रीब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्त्तान्तर्गतब्रह्मावर्त्तैकदेशे (एतद्भिन्नदेशे तस्योहः कार्यः) अमुकप्रदेशे अमुकक्षेत्रे अमुकसंख्यामुकविक्रमसंवत्सरे अमुकायने अमुकर्तौ अमुकगोले अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे

अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवंगुणविशिष्टायां शुभपुण्यवेलायाम् अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः सपत्नीकः) ममात्मनः सपरिवारकुटुम्बस्य ज्ञाताज्ञातसकलपापक्षयार्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीमद्रामचन्द्रप्रीतिपूर्वकं सनातनधर्माभ्युत्थानाय श्रीरामराज्यप्रवर्त्तनाय गोविप्रवेदधर्मसंस्कृतिराष्ट्रसंरक्षणाय सकललोककल्याणाय च साङ्गावरणं श्रीरामचन्द्रपूजनमहं करिष्ये । (ॐ अद्य श्रीभगवत्प्रीत्यर्थं श्रीरामचन्द्रपूजनं करिष्ये । वेति ।)

**पुनर्जलमादाय-** तदङ्गत्वेन दिग्रक्षणं कर्मकलशदीपशङ्खघण्टाद्यर्चनं निर्विघ्नतासिद्ध्यर्थं प्रणामात्मकं सिद्धिबुद्धिसहितमहागणपतिपूजनं च करिष्ये ॥ ततः-

ॐ यज्जाग्रतो दूरमुदैति दैवं तदुसुप्तस्य तथैवैति । दूरङ्गमञ्ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ इति त्रिवारं पठेत् ।

**दिग्रक्षणम्** । वामहस्ते रक्षासूत्रसहितगौरसर्षपान् गृहीत्वा दक्षिणेनाच्छाद्य रक्षोघ्नमन्त्रं पठेत्- ॐ रक्षोहा व्विश्श्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन पूजाकर्म समारभे ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । ते सर्वेऽप्यपगच्छन्तु पूजाकर्म करोम्यहम् ॥ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ इति रक्षासूत्रं पात्रे निधाय सर्वदिक्षु सर्षपान्विकीर्य त्रिवारं वामपादपार्ष्णिघातैस्तालत्रयेण वा भौमान् जलेनान्तरिक्षान् स्वदृष्ट्यावलोकनेन च दिव्यानुत्पातानुत्सारयेत् । ततः 'ॐ शार्ङ्गाय सशराय सुदर्शनायास्त्रराजाय हुं फट्' इति प्रोच्य छोटिकया (अंगुष्ठतर्जनीस्फोटं छोटिका मुद्रिका मता) दिग्बन्धनं कुर्यात् । नेत्रोदकस्पर्शः । तत आदित्यमुपतिष्ठेद्गायत्रीं च जपेत् ॥

**कर्मकलशार्चनम्** । स्ववामेऽष्टदलाक्षतपुञ्जोपरि कलशे वरुणमावाहयेत् । हस्तेऽक्षतान्गृहीत्वा- ॐ तत्त्वा यामि ब्ब्रह्म्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेह बोद्ध्युरुशग्गूंस मा नऽआयुः प्प्रमोषीः ॥ ॐ भूर्भुवः स्वः वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि । ॐ भूर्भुवः स्वः वरुणाय नमः । वरुण सुप्रतिष्ठितो वरदो भव । इति प्रतिष्ठाप्य पूजयेत् । ततोऽनामिकया कलशं स्पृष्ट्वा गङ्गादिनदीस्तीर्थादीनि चावाहयेत्- गङ्गे च

यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ ॐ ऋग्वेदाय नमः । ॐ यजुर्वेदाय नमः । ॐ सामवेदाय नमः । ॐ अथर्ववेदाय नमः । ॐ अप्पतिवरुणाय नमः । ॐ गङ्गादिनदीभ्यो नमः । ॐ सप्तसागरेभ्यो नमः । ॐ सर्वतीर्थेभ्यो नमः । आवाहयामि सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ इति सम्पूज्य प्रार्थयेत्- जलाधिप नमस्तुभ्यं नमस्ते पद्मिनीप्रिय । पूजाकर्मसमृद्ध्यर्थं पात्रेऽस्मिन् सुस्थिरो भव ॥ ॐ वरुणाद्यावाहितदेवताभ्यो नमः इति सम्पूज्य पुनरंकुशमुद्रया (अंकुशाख्या भवेन्मुद्रा पृष्ठेऽनामाकनिष्ठया । अंगुष्ठे तर्जनी वक्रा सरला चापि मध्यमा ॥) सूर्यमण्डलात् सर्वाणि तीर्थान्यावाह्य 'वम्' इति धेनुमुद्रया (अन्योन्याभिमुखौ श्लिष्टौ कनिष्ठानामिका पुनः । तथा तु तर्जनीमध्या धेनुमुद्रा प्रकीर्तिता ॥) अमृतीकृत्य 'हुम्' इति कवचेन (कवचाख्या त्वियं मुद्रा ह्यंगुल्यकृतनालिकाः । स्कन्धादानपर्यन्तं पाण्योस्तु प्रक्रमो भवेत् ॥) अवगुण्ठ्य (सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी । अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥) मत्स्यमुद्रया (मत्स्यमुद्राऽधोमुखं तु वामहस्तं तदूर्ध्वतः । तादृशं दक्षिणं न्यस्यांगुष्ठौ चालयेदिति ॥) आच्छाद्य 'वं वरुणाय नमः' इत्यनेनाष्टवारं जलमभिमन्त्र्य (मन्त्रजपपूर्वकेक्षणादिसंस्कारोऽभिमन्त्रणम्) तस्मादुदकादुदकं गृहीत्वा- अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनातु ३ ॥ इति मन्त्रेण वारत्रयं कुशोदकैरात्मानं पूजासम्भारान् पूजाभूमिं च प्रोक्षयेत् ।

दीपस्थापनम् । गणपतिं स्मृत्वा स्ववामे देवतादक्षिणे निर्वातस्थले बिन्दुत्रिकोणषट्कोणयन्त्रं चन्दनादिना विलिख्य सम्पूज्य श्वेतोर्ध्ववर्त्तिकायुतं गोघृतदीपं प्रज्वाल्य सम्पूजयेत्- ॐ अग्निर्ज्ज्योतिषा ज्ज्योतिष्म्मान्रुक्क्मो व्वर्च्चसा व्वर्च्चस्वान् । सहस्रदाऽअसि सहस्राय त्त्वा ॥ ॐ दीपाय नमः । इति सम्पूज्य नमस्कुर्यात्- भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् । यावत्पूजासमाप्तिः स्यात्तावत्त्वं सुस्थिरो भव ॥ इति प्रणम्य शरीरशुद्ध्यर्थं 'ॐ रां हृदयाय नमः । ॐ रीं शिरसे स्वाहा (उपनीतद्विजातिभिरेव स्वाहाशब्दोच्चारणं कर्तव्यमन्यैस्तु 'नमः' इति) । ॐ रूं शिखायै वषट् । ॐ रैं कवचाय हुम् । ॐ रौं नेत्राभ्यां वौषट् (श्रीरामार्चनचन्द्रिकादौ नेत्रत्रयायेत्युक्तम्) । ॐ रः अस्त्राय फट् ।' इति षडङ्गन्यासं कुर्यात् । हस्ते जलं गृहीत्वा- अनेन पूजनेन दीपः प्रीयताम् ।

शङ्खपूजनम् । स्ववामे पुरतस्त्रिकोणमुल्लिख्य तत्र 'ॐ आधारशक्त्यै नमः' इति आधारत्रिपदिकां संस्थाप्य सम्पूज्य 'हुं' इति प्रक्षालितशङ्खं त्रिपदिकोपरि संस्थाप्य गन्धपुष्पादिकं क्षिप्त्वा जलेनापूर्य पूजयेत्- ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः

पुरोहितः । तमीमहे महागयम् ॥ 'ॐ क्लीं महाजलचराय हुं फट् स्वाहा पाञ्चजन्याय नमः' इत्यावाह्य 'ॐ शङ्खाय नमः' इति सम्पूज्य पुनस्तज्जले तुलसीगन्धपुष्पं निधाय नमस्कुर्यात्- ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । नमितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥ अनेन पूजनेन शङ्खः प्रीयताम् ।

**घण्टापूजनम्** । हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा घण्टां वादयित्वा मध्ये पूजयेत्- ॐ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोमऽआत्माच्छन्दाग्गुँस्यङ्गानि यजूग्गुँषि नाम ॥ साम ते तनूर्व्वामदेव्यँय्यज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः । सुपर्णोऽसि गरुत्मान्दिवङ्गच्छ स्वः पत ॥ ॐ घण्टास्थगरुडाय नमः । इति सम्पूज्य नमस्कुर्यात्- पक्षिराज नमस्तुभ्यं श्रीविष्णोः प्रियवाहन । रक्षोभयमपाकृत्य सर्वविघ्नान्निवारय ॥ अनेन पूजनेन घण्टास्थगरुडः प्रीयताम् ॥

## सिद्धिबुद्धिसहितमहागणाधिपतिस्मरणपूजनम्

अविरलमदजलनिवहं भ्रमरकुलानीकसेवितकपोलम् । अभिमतफलदातारं कामेशं गणपतिं वन्दे ॥ शैवैस्त्वदीयैरुत वैष्णवैश्च शाक्तैश्च सौरैरपि सर्वकार्ये । शुभाशुभे लौकिकवैदिके च त्वमर्चनीयः प्रथमं प्रयत्नात् ॥ विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यवाड् विघ्नव्यालकुलाभिमानगरुडो विघ्नेभपञ्चाननः । विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाम्बुधेर्वाडवो विघ्नाघौघघनप्रचण्डपवनो विघ्नेश्वरः पातु नः ॥ ॐ सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः नमस्कारात्मकं पूजनं समर्पयामि ॥ अनेन पूजनेन सिद्धिबुद्धिसहितः श्रीमन्महागणाधिपतिः प्रीयतां न मम । (सम्पूर्णपूजनमिच्छेच्चेत्तत्कुर्यात् ।)

**आचार्यादिवरणम्** । श्रीगणपतिं स्मृत्वा यजमानो दक्षिणहस्तेन वामहस्ते वरणसम्भारान्निधाय दक्षिणे त्रिकुशादीन्यादाय- ॐ अद्य श्रीरामपूजनकर्मणि अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्वरणसम्भारैः आचार्यत्वेन त्वामहं वृणे । ॐ वृतोऽस्मीति प्रतिवचनम् । यजमानः प्रार्थयेत्- यथाविहितं कर्म कुरु । ॐ करवाणीति प्रतिब्रूयात् । अन्यब्राह्मणांश्च वृणुयात् । तत आचार्यपुरस्सरं यजमानहस्ते रक्षासूत्रबन्धनम् ॥

**पात्रासादनम्-** ॐ अद्य श्रीरामप्रीत्यर्थं पात्रासादनपूर्वकं भगवतः श्रीरामचन्द्रस्य पूजनं करिष्ये । **तत्रादौ** श्रीरामपूजनार्थं कलशादिप्रोक्षण्यन्तानामष्टपात्राणां स्थापनार्थमेकस्मिन् प्रक्षालिते शुद्धे समे काष्ठपीठे स्ववामत आरभ्य दक्षिणसंस्थं वर्त्तुलाष्टदलचतुरस्रभूपुरात्मकान्यष्टयन्त्राणि (अन्यप्रकारोऽपि विद्यते) कुर्यात् । एवमष्टयन्त्रयुतां काष्ठपट्टिकां स्वदेवतयोर्मध्ये स्थापयित्वा स्ववामतः प्रथमयन्त्रे कलशस्थापनं कुर्यात् ।

**कलशस्थापनम्** । प्रथमयन्त्रं शङ्खमुद्रया (वामांगुष्ठं च संगृह्य दक्षिणेन तु मुष्टिना । कृत्वोत्तानं तथा मुष्टिमंगुष्ठं तु प्रसारयेत् ।। वामांगुल्यस्तथाश्लिष्टाः संयुताः सुप्रसारिताः । दक्षिणांगुष्ठके लग्ना मुद्रा शङ्खस्य भूतिदा ।।) संस्तभ्य मूलेन सम्पूज्य 'हुं' इति त्रिपदिकारूपं कलशपात्राधारं प्रक्षाल्य संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवताकलशपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेनाधारोपरि संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवताकलशपात्राय नमः' इति पात्रं सम्पूज्य मूलेन जलमापूर्य गरुडमुद्रया (रामे गरुडमुद्रिका- सम्मुखौ तु करौ कृत्वा ग्रन्थयित्वा कनिष्ठिके । पुनश्चाधोमुखे कृत्वा तर्जन्यौ योजयेत्तयोः ।। मध्यमानामिके द्वे तु पक्षाविव विचालयेत् । मुद्रैषा पक्षिराजस्य सर्वविघ्ननिवारिणी ।।) निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवताकलशपात्रामृताय नमः' इति कलशजलं सम्पूज्य 'फट्' इति संरक्ष्य मूलेन श्रीराममावाह्य आवाहनादिमुद्राः प्रदर्शयेत् । तद्यथा । सर्वत्र मूलमुच्चार्य- हे श्रीराम ! आवाहितो भव (हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः । अंगुष्ठौ निःक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता ।।) । स्थापितो भव (अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि) । सन्निहितो भव (आश्लिष्टमुष्टियुगला प्रोन्नतांगुष्ठयुग्मका । सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ।।) । सन्निरुद्धो भव (अंगुष्ठगर्भिणी सैव सन्निरुद्धा समीरिता) । सम्मुखीकृतो भव (उत्तानौ द्वौ करौ मुष्टी सम्मुखीकरणी तथा) । सकलीकृतो भव (देवतानां षडङ्गानां न्यासः स्यात्सकलीकृतिः) । अवगुण्ठितो भव (सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी । अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ।।) । अमृतीकृतो भव (अमृतीकरणं कुर्यात्तथा देशिकसत्तमः । अन्योऽन्यग्रथितांगुष्ठा प्रसारितकरांगुली: ।।) । परमीकृतो भव (करसम्पुटेन नमस्कारः परमीकरणम्) ।। ततः सामान्यार्घपात्रं विशेषार्घपात्रं पाद्यपात्रमर्घपात्रमाचमनीयपात्रं मधुपर्कपात्रं प्रोक्षणीपात्रमन्यान्योपचारद्रव्याणि च सौकर्यार्थं क्रमेण स्थापयेत् । (सामान्येन- अर्घ्यपात्राचमनीयमधुपर्काचमस्य च । पञ्चपात्राणि पुष्पादीन्स्थापयेत्स्वीयदक्षिणे ।। वामेऽम्बुपात्रं व्यजनं छत्रमादर्शचामरे । कृताञ्जलिर्वामदक्षे गुरून्गणपतिं नमेत् ।।) तन्मन्त्रमहोदधिगायत्रीपुरश्चरणव्रतोद्यापनचन्द्रिकादिभिर्विलिख्यते ।

ततस्तद्दक्षिणे सामान्यार्घपात्रस्थापनम् । तत्र द्वितीययन्त्रं शङ्खमुद्रया संस्तभ्य मूलेन सम्पूज्य 'हुं' इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवतासामान्यार्घपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवतासामान्यार्घपात्राय नमः' इति पात्रं सम्पूज्य मूलेन जलमापूर्य गरुडमुद्रया निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवतासामान्यार्घपात्रामृताय नमः' इति पात्रजलं सम्पूज्य 'फट्' इति संरक्ष्य मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति ॥

तद्दक्षिणे विशेषार्घपात्रस्थापनम् । तत्र तृतीययन्त्रं शङ्खमुद्रया संस्तभ्य मूलेन सम्पूज्य 'हुं' इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवताविशेषार्घपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवतासामान्यार्घपात्राय नमः' इति पात्रं सम्पूज्य मूलेन जलमापूर्य गरुडमुद्रया निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवताविशेषार्घपात्रामृताय नमः' इति जलं सम्पूज्य 'फट्' इति संरक्ष्य मूलेन देवमावाह्य सम्पूज्य मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति ॥

तद्दक्षिणे पाद्यपात्रस्थापनम् । तत्र चतुर्थयन्त्रं शङ्खमुद्रया संस्तभ्य मूलेन सम्पूज्य 'हुं' इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवतापाद्यपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवतापाद्यपात्राय नमः' इति पात्रं सम्पूज्य मूलेन जलमापूर्य श्यामाकदूर्वाविष्णुक्रान्तादीनि प्रक्षिप्य गरुडमुद्रया निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवतापाद्यपात्रामृताय नमः' इति जलं सम्पूज्य 'फट्' इति संरक्ष्य मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति ॥

तद्दक्षिणे अर्घपात्रस्थापनम् । तत्र पञ्चमयन्त्रं शङ्खमुद्रया संस्तभ्य मूलेन सम्पूज्य 'हुं' इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवतार्घपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवतार्घपात्राय नमः' इति पात्रं सम्पूज्य मूलेन जलमापूर्य दूर्वातिलदर्भाग्रसर्षपयवगन्धाक्षतपुष्पाणि प्रक्षिप्य गरुडमुद्रया निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवतार्घपात्रामृताय नमः' इति जलं

सम्पूज्य 'फट्' इति संरक्ष्य मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति ॥

तद्दक्षिणे आचमनीयपात्रस्थापनम् । तत्र षष्ठयन्त्रं शङ्खमुद्रया संस्तभ्य मूलेन सम्पूज्य 'हुं' इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवताचमनीयपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवताचमनीयपात्राय नमः' इति पात्रं सम्पूज्य मूलेन जलमापूर्य जातीफलैलालविङ्गकङ्कोलं प्रक्षिप्य गरुडमुद्रया निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवताचमनीयपात्रामृताय नमः' इति जलं सम्पूज्य 'फट्' इति संरक्ष्य मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति ॥

तद्दक्षिणे मधुपर्कपात्रस्थापनम् । तत्र सप्तमयन्त्रं शङ्खमुद्रया संस्तभ्य मूलेन सम्पूज्य 'हुं' इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवतामधुपर्कपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवतामधुपर्कपात्राय नमः' इति पात्रं सम्पूज्य मूलेन दधिमधुघृतानि प्रक्षिप्य गरुडमुद्रया निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवतामधुपर्कपात्रामृताय नमः' इति सम्पूज्य 'फट्' इति संरक्ष्य मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति ॥

तद्दक्षिणे शङ्खदक्षिणे च प्रोक्षणीपात्रस्थापनम् । तत्राष्टमयन्त्रं शङ्खमुद्रया संस्तभ्य मूलेन सम्पूज्य 'हुं' इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ मं वह्निमण्डलाय दशकलात्मने श्रीरामदेवताप्रोक्षणीपात्राधाराय नमः' इत्याधारं सम्पूज्य 'हुं' इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य 'ॐ श्रीसूर्यमण्डलाय द्वादशकलात्मने श्रीरामदेवताप्रोक्षणीपात्राय नमः' इति पात्रं सम्पूज्य मूलेन जलमापूर्य गरुडमुद्रया निरीक्ष्य 'ॐ चन्द्रमण्डलाय षोडशकलात्मने श्रीरामदेवताप्रोक्षणीपात्रामृताय नमः' इति सम्पूज्य 'फट्' इति संरक्ष्य मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति । पुनर्विशेषार्घबिन्दुं सर्वपात्रे प्रक्षिप्य शङ्खोदकेन प्रोक्षणीजलेन वा पूजासामग्रीं सम्प्रोक्ष्यात्मानं प्रोक्षयेत् ।

# श्रीराममहाराजोपचारपूजनम्

नमः श्रीरामचन्द्राय जानकीशाय ते नमः । नमो जगन्निवासाय राघवाय नमो नमः ॥
मिथिलेशसुतां सीतां श्रीरामहृदयेश्वरीम् । श्रीरामं जानकीप्राणं प्रणमामि पुनः पुनः ॥

करान्न्यासः- ॐ रां अंगुष्ठाभ्यां नमः । रीं तर्जनीभ्यां नमः । रूं मध्यमाभ्यां नमः । रैं अनामिकाभ्यां नमः । रौं कनिष्ठिकाभ्यां नमः । रः करतलकरपृष्ठाभ्यां नमः ॥ हृदयादिषडङ्गन्यासः- अनंगुष्ठप्रसारिततर्जन्यादिचतुष्टयेन- ॐ रां हृदयाय नमः । तेनैव- रीं शिरसे स्वाहा । अंगुष्ठहीनमुष्टिना- रूं शिखायै वषट् । स्कन्धान्नाभ्यन्तं दशांगुलिभिः- रैं कवचाय हुम् । तर्जनीमध्यमाभ्याम्- रौं नेत्राभ्यां वौषट् (तर्जनीमध्यमानामिकाभिः- रौं नेत्रत्रयाय वौषट् वा) । प्रसारितहस्ताभ्यां त्रिवारम्- रः अस्त्राय फट् । मन्त्रन्यासः- रां नमो ब्रह्मरन्ध्रे । रां नमो भ्रुवोर्मध्ये । मां नमो हृदि । यं नमो नाभौ । नं नमो लिङ्गे (उदकस्पर्शः) । मंः नमः पादयोः ॥

ध्यानम्- अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे । ध्यायेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् । तन्मध्येऽष्टदलं पद्मं नानारत्नप्रवेष्टितम् । तत्र श्रीरामचन्द्राख्यं ध्यायेत्तेजः परात्परम् ॥ मातुः पार्श्वे चरन्तं मणिमयशयने मञ्जुभूषाञ्चिताङ्गं मन्दं मन्दं पिबन्तं मुकुलितनयनं स्तन्यमन्यस्तनाग्रम् । अंगुल्यग्रैः स्पृशन्तं सुखपरवशया सस्मितालिङ्गिताङ्गं गाढं गाढं जनन्या कलयतु हृदयं मामकं रामबालम् ॥ इति ध्यात्वा मानसोपचारैर्भगवन्तं श्रीरामचन्द्रं पूजयेत् । तत्तन्मूलेन पाद्याद्युपचारपात्राणि उपचारांश्च सम्पूज्य तन्त्रेणान्तर्यागं कृत्वा बहिर्यागं कुर्यात् । (अन्तर्यागबहिर्यागौ गृहस्थः सर्वमाचरेत् ।)

अन्तर्यागरूपमानसोपचारपूजनम्- ॐ श्रीरामाय लं पृथिव्यात्मकं गन्धं परिकल्पयामि । श्रीरामाय हं आकाशात्मकं पुष्पं परिकल्पयामि । श्रीरामाय यं वाय्वात्मकं धूपं परिकल्पयामि । श्रीरामाय रं वह्न्यात्मकं दीपं परिकल्पयामि । श्रीरामाय वं अमृतात्मकं नैवेद्यं परिकल्पयामि । श्रीरामाय सौं सर्वात्मकं नमस्कारान् परिकल्पयामीति ॥

ततो भद्रमण्डले विशिष्टासने वा मण्डूकादिपीठदेवतापूजनम् । तद्यथा पीठमध्ये- ॐ मं मण्डूकाय नमः ।१। ॐ कां कालाग्निरुद्राय नमः ।२। ॐ आं आधारशक्त्यै नमः ।३। ॐ कूं कूर्माय नमः ।४। ॐ पृं पृथिव्यै नमः ।५। ॐ अं अमृतार्णवाय नमः ।६। ॐ श्वें श्वेतद्वीपाय नमः ।७। ॐ कं कल्पवृक्षाय नमः ।८। ॐ मं मणिमण्डपाय नमः ।९। ॐ स्वं स्वर्णसिंहासनाय नमः ॥१०॥ इति संस्थाप्य पूजयेत् ॥ अग्निकोणादिषु- ॐ धं धर्माय नमः ।१। ॐ ज्ञां ज्ञानाय नमः ।२। ॐ वैं

वैराग्याय नमः ।३। ॐ ऐं ऐश्वर्याय नमः ॥४॥ पूर्वादिदिक्षु- ॐ अं अधर्माय नमः ।१। ॐ अं अज्ञानाय नमः ।२। ॐ अं अवैराग्याय नमः ।३। ॐ अं अनैश्वर्याय नमः ॥४॥ पुनर्मध्ये- ॐ अं अनन्ताय नमः ।१। ॐ पं पद्माय नमः ।२। ॐ आं आनन्दमयकन्दाय नमः ।३। ॐ सं संविन्नालाय नमः ।४। ॐ विं विकारमयकेसरेभ्यो नमः ।५। ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः ।६। ॐ पं पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः ।७। ॐ द्वादशकलात्मने सूं सूर्यमण्डलाय नमः ।८। ॐ षोडशकलात्मने चं चन्द्रमण्डलाय नमः ।९। ॐ दशकलात्मने वं वह्निमण्डलाय नमः ।१०। ॐ सं सत्त्वाय नमः ।११। ॐ रं रजसे नमः ।१२। ॐ तं तमसे नमः ।१३। ॐ आं आत्मने नमः ।१४। ॐ अं अन्तरात्मने नमः ।१५। ॐ पं परमात्मने नमः ।१६। ॐ मां मायातत्त्वाय नमः ।१७। ॐ कं कलातत्त्वाय नमः ।१८। ॐ विं विद्यातत्त्वाय नमः ।१९। ॐ पं परतत्त्वाय नमः ॥२०॥ ततो गन्धादिभिः 'ॐ मण्डूकादिपरतत्त्वान्तपीठदेवताभ्यो नमः' इति पूजयेत् ।

ततो भद्रपूजापीठेऽष्टकमलपत्रेषु पूर्वाद्यष्टदिक्षु मध्ये च प्रदक्षिणक्रमेण पीठशक्तीः पूजयेत्- ॐ विमलायै नमः ।१। ॐ उत्कर्षिण्यै नमः ।२। ॐ ज्ञानायै नमः ।३। ॐ क्रियायै नमः ।४। ॐ योगायै नमः ।५। ॐ प्रह्वयै नमः ।६। ॐ सत्यायै नमः ।७। ॐ ईशानायै नमः ॥८॥ कर्णिकायाम्- ॐ अनुग्रहायै नमः ॥९॥ इति सम्पूज्य प्रार्थ्य पुनर्गन्धादिभिः 'ॐ नमो भगवते श्रीरामचन्द्राय सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपद्मपीठात्मने नमः' इति पीठं सम्पूज्य श्रीरामचन्द्राय पुष्पाद्यासनं दद्यात् ।

नूतनमूर्तियन्त्रयोरग्न्युत्तारणप्रतिष्ठे कार्ये । हस्ते जलमादाय- ॐ अद्यैतत् श्रीरामचन्द्रमूर्तियन्त्रयोः अग्निप्रतपनादिदोषनिवृत्त्यर्थमग्न्युत्तारणपूर्वकं प्रतिष्ठां करिष्ये ।

स्वर्णादिपात्रे सौवर्णं श्रीरामचन्द्रं सौवर्णादियन्त्रं (केवलं मूर्तिं यन्त्रं वापि) च निधाय गोघृतेनाभ्यज्य अग्न्युत्तारणमन्त्रैस्तदुपरि दुग्ध-जलधारां दद्यात्- ॐ समुद्रस्य त्वा व्वकयाग्ग्ने परिव्ययामसि । पावकोऽअस्मभ्यग्गूंशिवो भव ॥१॥ हिमस्य त्त्वा जरायुणाग्ग्ने परिव्ययामसि । पावकोऽअस्मभ्यग्गूंशिवो भव ॥२॥ उपज्ज्मन्नुपवेतसेवतरनदीष्वा । अग्ग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमन्नो यज्ञम्पावकवर्ण्णग्गूंशिवङ्कृधि ॥३॥ अपामिदन्न्ययनग्गूंसमुद्रस्य निवेशनम् । अन्न्याँस्ते अस्मत्तपन्तु हेतयः । पावकोऽअस्मभ्यग्गूंशिवो भव ॥४॥ अग्ग्ने पावकरोचिषा मन्द्रया देवजिह्वया । आ देवान्वक्षि यक्षि च ॥५॥ सनः पावकदीदिवोऽग्गने देवाँ२॥ऽइहावह । उपयज्ज्ञग्गूंहविश्च्च नः ॥६॥ पावक या यश्श्चितयन्त्या कृपा क्षामन् रुरुचऽउषसो न भानुना

। तूर्व्वन्नयामन्नेतशस्य नूरणऽआ यो घृणे न ततृषाणोऽअजरः ॥७॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्च्चिषे । अन्याँऽस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मब्भ्यगंगूंशिवो भव ॥८॥ नृषदे व्वेडप्सुषदे व्वेड्ड्बर्हिषदे व्वेड्ड्वनसदे व्वेट्ट्स्वर्व्विदे व्वेट् ॥९॥ ये देवा देवानाँय्यज्ञिया यज्ञियानाग्गुँ संव्वत्सरीणमुपभागमासते । अहुतादो हविषो यज्ञेऽअस्मिन्त्स्वयम्पिबन्तु मधुनो घृतस्य ॥१०॥ ये देवा देवेष्ष्वधि देवत्त्वमायन्ये ब्रह्मणः पुरऽएतारोऽअस्य । येब्भ्योऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्याऽ अधिस्नुषु ॥११॥ प्राणदाऽअपानदा व्यानदा व्वर्चोदा व्वरिवोदाः । अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मब्भ्यगंगूंशिवो भव ॥१२॥ इत्यग्न्युत्तारणं कृत्वा स्वच्छवस्त्रेण संशोध्य पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य श्रीराममूर्तिप्राणप्रतिष्ठां कुर्यात् । मूर्तिं स्पृष्ट्वा- ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहमस्याः श्रीरामचन्द्रमूर्तेः प्राणा इह प्राणाः । ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहमस्याः श्रीरामचन्द्रमूर्तेः जीव इह स्थितः । ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहमस्याः श्रीरामचन्द्रमूर्तेः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ इति प्राणप्रतिष्ठां कुर्यात् । ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्ट्टँय्यज्ञगंगूंसमिमन्दधातु । व्विश्श्वेदेवासऽइह मादयन्तामो॥३ँम्प्रतिष्ठ ॥ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥ 'ॐ श्रीरामचन्द्रः सुप्रतिष्ठितो भव' इति प्रतिष्ठापयेत् । ततः स्वर्णशलाकया नेत्रोन्मीलनं कुर्यात्- ॐ व्वृत्रस्यासि कनीनकश्च्चक्षुर्द्दाऽअसि चक्क्षुर्म्मे देहि ॥ इति नेत्रोन्मीलनं कृत्वा गन्धाद्युपचारैः सम्पूज्य गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलकर्मोपनयनवेदव्रतचतुष्टयस्नानोद्वाहरूपषोडशसंस्कारार्थं षोडशवारं प्रणवमावर्त्य षोडशसंस्कारान् विभावयेत् ।

**संस्कारसङ्कल्पः-** ॐ अद्य श्रीरामचन्द्रस्य गर्भाधानादिषोडशसंस्कारसिद्ध्यर्थं षोडशप्रणवावृत्तिं करिष्ये । प्रणम्य- ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॥ पुनर्जलेन- अनया षोडशप्रणवावृत्त्या श्रीरामचन्द्रस्य षोडशसंस्काराः सम्पद्यन्ताम् । ततो ध्यात्वा 'ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः' इति मन्त्रान्तपुरुषसूक्तादिमन्त्रैरावाहनाद्युपचारैर्मूर्तौ शालग्रामे वा श्रीरामपूजनं

कुर्यात् । तत्र श्रीरामपूजनयन्त्रमपि स्वर्णादिपात्रे निधाय 'ॐ श्रीरामपूजनयन्त्राय नमः' इत्यावाह्य सहैव यथाक्रमं पूजयेत् ।

ध्यानम्- साकेते शरदिन्दुकुन्दधवले सौधे महामण्डपे पर्यस्तागरुधूपगन्धललिते कर्पूरदीपोज्ज्वले । सुग्रीवाङ्गदवायुपुत्रसहितं सौमित्रिणा सेवितं लीलामानुषविग्रहं रघुवरं श्रीमैथिलीशं भजे ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः ध्यानं समर्पयामि ।

आवाहनम्- ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिग्गूं सर्व्वतस्पृत्त्वात्यतिष्ठद्दशाङ्गुलम् ॥ ॐ सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन् । आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो नकिरद्धा नु वेद ॥ ॐ अर्वाची सुभगे भव सीते वन्दामहे त्वा । यथा नः सुभगासिस यथा नः सुफलासिस ॥ आवाहयामि विश्वेशं जानकीवल्लभं विभुम् । कौशल्यातनयं विष्णुं श्रीरामं सीतया युतम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः आवाहनं समर्पयामि (शालग्रामे स्थावरे वाऽऽवाहनार्थे तुलसीपत्रपुष्पं निवेदयेत्) । आवाहनमुद्रां दर्शयेत् (अनामामूलसंल्लग्नांगुष्ठाग्राञ्जलिरीरिता । देवाह्वानकरी चैषा मुद्रावाहनसंज्ञिता ॥) ।

स्वागतम्- ॐ इदं व्विष्णुर्व्विचक्क्रमे त्रेधा निदधे पदम् । समूढमस्स्य पाग्गुँसुरे स्वाहा ॥ ॐ घृतेन सीता मधुना समज्ज्यतां व्विश्श्वैर्द्देवैरनुमता मरुद्भिः । ऊर्ज्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाब्भ्याववृत्त्स्व ॥ यस्य दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये । तस्मै श्रीरामचन्द्राय ससीताय च स्वागतम् ॥ कृतार्थोऽनुगृहीतोऽस्मि सफलं जीवितं मम । श्रीराम देवदेवेश सुस्वागतमिदं पुनः ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः स्वागतं समर्पयामि । स्वागतमुद्रां दर्शयेत् (ईषन्नम्रांगुलीर्दक्षा संवेष्ट्यांगुष्ठकं करम् । स्वागतं स्वस्तिका मुद्रा मध्यमूलागतांगुलिः ॥) ।

आसनम्- ॐ पुरुषऽएवेदग्गूंसर्व्वँय्यद्भूतँय्यच्च भाव्व्यम् । उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥ राजाधिराजराजेन्द्र रामचन्द्र महीपते । रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः आसनं समर्पयामि । आसनमुद्रां दर्शयेत् (ईषन्नम्रांगुलीर्ज्ञेया संवृतांगुष्ठकन्धवत् । नम्रे कनिष्ठतर्जन्यौ करयोरग्रसङ्गते ॥ मध्यमानामिके कुर्यादित्येवासनमुद्रिका ॥) ।

पाद्यम्- ॐ एतावानस्य महिमातो ज्यायाँश्च्च पूरुषः । पादोऽस्य व्विश्श्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ त्रैलोक्यपावनानन्त नमस्ते रघुनायक ।

पाद्यं गृहाण राजर्षे नमो राजीवलोचन ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः पाद्यं समर्पयामि । पाद्यमुद्रां दर्शयेत् (द्वौ च प्रसारितौ हस्तौ पाद्यमुद्रा समीरिता) ।

**अर्घ्यम्-** ॐ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो व्विष्वङ् व्यक्क्रामत्साशनानशनेऽअभि ॥ परिपूर्णपरानन्द नमो रामाय वेधसे । गृहाणार्घ्यं मया दत्तं कृष्ण विष्णो जनार्दन ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः अर्घ्यं समर्पयामि । अर्घ्यमुद्रां दर्शयेत् (स्वस्ति(स्वागत)मुद्राद्विहस्तेन मुद्रात्वर्घ्यप्रकीर्तिता) ।

**आचमनम्-** ॐ ततो व्विराडजायत व्विराजोऽअधिपूरुषः । सजातोऽअत्त्यरिच्च्यत पश्चाद्भूमिमथो पुरः ॥ राजराजेन्द्र देवेश शरणागतवत्सल । गृहाणाचमनं राम नित्यशुद्ध परात्पर ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः आचमनीयं समर्पयामि । आचमनमुद्रां दर्शयेत् (तर्जनीमूलगांगुष्ठा दक्षिणाधः कनीयसी । प्रसार्य मध्यमास्तिस्रो मुद्राचामे प्रकीर्तिता ॥) ।

**मधुपर्कः-** स्वर्णरत्नपात्रस्थितं पात्रान्तरेण पिहितं दधिमधुघृतमिश्रितं मधुपर्कं दद्यात्- ॐ यन्नमधुनो मधव्व्यम्परमग्गूंरूपमन्नाद्द्यम् । तेनाहम्मधुनो मधव्व्येन परमेण रूपेणान्नाद्द्येन परमो मधव्व्योऽन्नादोऽसानि ॥ नमः श्रीरामचन्द्राय धर्मब्रह्मस्वरूपिणे । मधुपर्कं ददाम्येद्गृहाण जगताम्पते ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः मधुपर्कं समर्पयामि । मधुपर्कमुद्रां दर्शयेत् (युक्तावनामिकांगुष्ठौ तिस्रोऽगुल्यः प्रसारिताः । मधुपर्के तु सा मुद्रा सङ्कल्प्य करसङ्करे ॥) ततः श्रीरामप्रीतये प्रार्थनां कुर्यात्- प्रसीद जानकीनाथ सुप्रसीद सुरेश्वर । प्रसन्नो भव मे राजन् श्रीराम मधुसूदन ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः प्रार्थनां समर्पयामि ।

**मधुपर्काङ्गमाचमनम्-** नमः सत्याय शुद्धाय तत्त्वज्ञानस्वरूपिणे । गृहाणाचमनं राम सर्वलोकैकनायक ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः आचमनं समर्पयामि । पुनराचमनमुद्रां दर्शयेत् ।

**जलस्नानम्-** ॐ तस्माद्यज्ज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्च्चक्क्रे व्वायव्व्यानारण्ण्या ग्ग्राम्म्याश्च्च ये ॥ ब्रह्माण्डोदरमध्यस्थतीर्थैश्च रघुनन्दन । स्नपयिष्याम्यहं भक्त्या गृहाण जगदीश्वर ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः स्नानं समर्पयामि । स्नानमुद्रां दर्शयेत् (कृत्वा मुष्टिं तथा स्नाने मध्यमांगुष्ठकौ युतौ ॥) । स्नानाङ्गमाचमनीयं जलं समर्पयामि । आचमनमुद्रां च दर्शयेत् ।

गोदुग्धस्नानम्- ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ कामधेनुसमुद्भूतं सर्वेषां राम जीवनम् । पावनं यज्ञहेतुश्च पयः स्नानाय गृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः पयःस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । यदीच्छेत्सर्वत्र स्नानाचमनमुद्रे दर्शयेत् ।

गोदधिस्नानम्- ॐ दधिक्क्राव्णोऽअकारिषं जिष्णोरश्श्वस्य व्वाजिनः । सुरभिनो मुखात्करत्प्रणऽआयूग्गुँषि तारिषत् ॥ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया राम स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः दधिस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि ।

गोघृतस्नानम्- ॐ घृतङ्घृतपावानः पिबत व्वसां व्वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिशऽआदिशो व्विदिशऽउद्दिशो दिग्ग्भ्यः स्वाहा ॥ कामधेनुसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं राम गृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः घृतस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि ।

मधुस्नानम्- ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माद्ध्वीर्न्नः सन्त्वोषधीः ॥ मधुनक्क्तमुतोषसो मधुमत्पार्थिवग्ग्ंरजः । मधु द्यौरस्तु नः पिता ॥ मधुमान्नो व्वनस्पतिर्म्मधुमाँ२॥अस्तु सूर्य्यः । माद्ध्वीर्ग्गावो भवन्तु नः ॥ पुष्परेणुसमुत्पन्नं सुस्वादु मधुरं मधु । तेजःपुष्टिकरं दिव्यं स्नानार्थं राम गृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः मधुस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि ।

शर्करास्नानम्- ॐ अपाग्गुँरसमुद्द्वयसग्ग्ंसूर्य्ये सन्तग्ग्ंसमाहितम् । अपाग्गुँरसस्य यो रसस्तँव्वो गृह्णाम्म्युत्तममुपयाम गृहीतोऽसीन्द्राय त्वा जुष्ट्टं गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्ट्टतमम् ॥ इक्षुसारसमुद्भूतां शर्करां पुष्टिदां शुभाम् । मलापहारिकां दिव्यां स्नानार्थं राम गृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः शर्करास्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि ।

अथवैकतन्त्रेण पञ्चामृतस्नानं कारयेत्- ॐ पञ्च नद्द्यः सरस्वतीमपि यन्ति सस्रोतसः । सरस्वती तु पञ्चधा सो देशेभवत्सरित् ॥ पञ्चामृतं समानीतं पयो

दधि घृतं मधु । सशर्करं मया दत्तं श्रीराम प्रतिगृह्यताम् ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः मिश्रितपञ्चामृतस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि ।

**तैलाभ्यङ्गस्नानम्-** क्षीराब्धिकल्लोलपरम्परासु देवीरमावारविलासवश्य । चाम्पेयतैलाद्युपमर्द्दनेन श्रीराम संस्नाहि जगन्निवास ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः तैलाभ्यङ्गस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि ।

**गन्धोदकस्नानम्-** ॐ गन्धर्व्वस्त्वा व्विश्श्वावसुः परिदधातु व्विश्श्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्ग्निरिडऽईडितः ।। मलयाचलसम्भूतचन्दनोदकमिश्रितम् । कुंकुमाक्तमिदं स्नानं श्रीराम प्रतिगृह्यताम् ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः गन्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । इति स्नानं कारयित्वा गन्धादिभिर्देवं सम्पूज्य निर्माल्यं विसृज्य पुनः सम्पूज्य शङ्खे जलगन्धपुष्पतुलसीपत्राणि निधाय पुरुषसूक्तेनाभिषेकं (गन्धयुक्तोदकैरीशमभिषिञ्चेन्मनुं स्मरन्) कुर्यात् ।

**अभिषेकः-** ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिग्गूं सर्व्वतस्पृत्त्वात्यतिष्ठद्दशाङ्गुलम् ।।१।। पुरुषऽएवेदग्गूंसर्व्वँय्यद्भूतँय्यच्च भाव्व्यम् । उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ।।२।। एतावानस्य महिमातो ज्यायाँश्च्च पूरुषः । पादोऽस्य व्विश्श्वा भूतानि त्रिपादस्यामृतन्दिवि ।।३।। त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो व्विष्ष्वङ्व्व्यक्क्रामत्साशनानशनेऽअभि ।।४।। ततो व्विराडजायत व्विराजोऽअधिपूरुषः । सजातोऽअत्त्यरिच्च्यत पश्च्चाद्भूमिमथो पुरः ।।५।। तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्च्चक्क्रे व्वायव्व्यानारण्ण्या ग्ग्राम्म्याश्च्च ये ।।६।। तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानि जज्ञिरे । छन्दाग्गुँसि जज्ञिरे तस्माद्यजुस्तस्म्मादजायत ।।७।। तस्म्मादश्श्वाऽअजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्म्मात्तस्म्माज्जाताऽअजावयः ।।८।। तँय्यज्ञम्बर्हिषि प्प्रौक्षन्पुरुषञ्जातमग्ग्रतः । तेन देवाऽअयजन्त साद्ध्याऽऋषयश्च्च ये ।।९।। यत्पुरुषँव्व्यदधुः कतिधा व्व्यकल्प्ययन् । मुखङ्किमस्यासीत्किम्बाहू किमूरू पादाऽउच्च्येते ।।१०।।

ब्राह्म्मणोऽस्य मुखमासीद्द्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्श्यः पद्द्भ्याग्गुँशूद्रोऽअजायत ॥११॥ चन्द्रमा मनसो जातश्च्चक्क्षोः सूर्य्योऽअजायत । श्रोत्राद्द्वायुश्च्च प्प्राणश्च्च मुखादग्ग्निरजायत ॥१२॥ नाब्भ्याऽआसीदन्तरिक्क्षग्गूंशीर्ष्णो द्द्यौः समवर्त्तत । पद्द्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथा लोकाँ२॥ऽअकल्प्पयन् ॥१३॥ यत्पुरुषेण हविषा देवा यज्ज्ञमतन्वत । व्वसन्तोऽस्यासीदाज्ज्यं ग्रीष्म्मऽइद्ध्मः शरद्धविः ॥१४॥ सप्प्तास्यासन्परिधयस्त्रिः सप्प्त समिधः कृताः । देवा यद्द्यज्ज्ञन्तन्वानाऽअबद्ध्नन्पुरुषम्पशुम् ॥१५॥ यज्ज्ञेन यज्ज्ञमयजन्त देवास्त्तानि धर्म्माणि प्प्रथमान्यासन् । ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्द्ध्याः सन्ति देवाः ॥१६॥ ॐ सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान् । तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥१॥ सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् । सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ॥२॥ महिमैष ततो ब्रह्मन्पुरुषस्य दुरत्ययः । पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ॥३॥ त्रिपात्पुरुष ऊर्ध्वोऽस्येहोदेत्पादोऽभवत्पुनः । सृती विचक्रमे विष्वङ्साशनानशने उभे ॥४॥ विराड्देहोऽभवत्तस्माद्विराजश्चातिपूरुषः । जातोऽत्यरिच्यत हि सः पश्चाद्भूमिमथो पुरः ॥५॥ पुरुषेण ततो यज्ञात्पृषदाज्यं हि सम्भृतम् । वायून्देवान्पशूँश्चक्रे ग्राम्यारण्याँश्च नारद ॥६॥ पुरुषाच्च ततो यज्ञादृचः सामानि जज्ञिरे । गायत्र्यादीनि छन्दांसि यजुस्तस्मादजायत ॥७॥ ततः पुरुषयज्ञाद्धि गावोऽश्वाश्चोभयोदतः । जज्ञिरेऽजावयस्तस्मान्न हि यज्ञः पशुं विना ॥८॥ यज्ञं तं बर्हिषि प्रौक्षन्सृष्टेः पूर्वं हि पूरुषम् । जातं देवा आयजन्त ऋषयः साध्यकाश्च ये ॥९॥ व्यदधुः पुरुषं यद्धि कतिधा च व्यकल्पयत् । मुखं बाहूरुपादाश्च विविधं ह्यस्य कल्पितम् ॥१०॥ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः । ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥११॥ मनसश्चन्द्रमा जातः सूर्यश्चक्षोरजायत । श्रोत्रात्प्राणश्च वायुश्च मुखादग्निरजायत ॥१२॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकस्तु नाभितः । स्वर्लोकः कल्पितो मूर्ध्ना चेति वै लोककल्पना ॥१३॥ हविषा पूरुषेणास्य देवा यज्ञमतन्वत । आज्यमासीद्वसन्तो हि ग्रीष्म इध्मः शरद्धविः ॥१४॥ सप्त परिधयोऽस्यासन्त्रिसप्त समिधः कृताः । यज्ञं देवाश्च तन्वाना अबध्नन्पुरुषम्पशुम् ॥१५॥ यज्ञं यज्ञेनायजन्त देवा धर्माणि तानि च । प्रथमानि नाकमासन्महिमानः सचन्त तम् ॥१६॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः वेदपुराणोक्तपुरुषसूक्तेनाभिषेकं समर्पयामि ॥

**शुद्धोदकस्नानम्-** ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्श्वग्गूंहि रिप्रम्प्रवहन्ति देवीरुदिदाब्भ्यः शुचिरापूतऽएमि ॥ दीक्षा तपसोस्तनूरसि तान्त्वा शिवाग्गुँशग्ग्माम्परिदधे भद्द्रं व्वर्ण्णं पुष्ष्यन् ॥ गङ्गासर्यूजलं दिव्यं नानातीर्थसमन्वितम् । समर्पितं मया राम स्नानाय प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः शुद्धोदकस्नानं समर्पयामि । आचमनीयं जलं समर्पयामि ॥ ततः सौवर्णी श्रीराममूर्ति शालग्रामं वा शुष्कांशुकेन सम्प्रोञ्छ्य सुगन्धिसारं विलेप्य दिव्यभद्रपीठे स्वर्णयन्त्रमध्ये संस्थाप्य वस्त्राद्युपचारान् दद्यात् ।

**पीतवस्त्रम्-** ॐ तस्म्माद्यज्ञात्सर्व्वहुतऽऋचः सामानि जज्ञिरे । छन्दाग्गुँसि जज्ञिरे तस्म्माद्यजुस्तस्म्मादजायत ॥ सन्तप्तकाञ्चनप्रख्यं पीताम्बरमिदं हरे । संगृहाण जगन्नाथ रामचन्द्र नमोऽस्तु ते ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः पीतवस्त्रं समर्पयामि । वस्त्रमुद्रां दर्शयेत् (मध्यमांगुष्ठकौ लग्नावन्यास्तिस्रः प्रसारिताः । वस्त्रमुद्रा समाख्याता सर्वतन्त्रविशारदैः ॥) । आचमनं समर्पयामि ।

**सोत्तरीयं यज्ञोपवीतम्-** ॐ तस्म्मादश्श्वाऽअजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्म्मात्तस्म्माज्जाताऽअजावयः ॥ श्रीरामाच्युत यज्ञेश श्रीधरानन्त राघव । ब्रह्मसूत्रं सोत्तरीयं गृहाण रघुनायक ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः सोत्तरीयं यज्ञोपवीतं समर्पयामि । यज्ञोपवीतमुद्रां दर्शयेत् (कनिष्ठांगुष्ठकौ लग्नौ तिस्रोऽन्यः सम्प्रसारिताः । यज्ञोपवीतमुद्रेयं कथितागमपारगैः ॥) । आचमनं समर्पयामि ।

**अलङ्करणानि-** ॐ हिरण्ण्यपाणिः सविता व्विचर्षणिरुभे द्यावापृथिवीऽ अन्तरीयते । अपामीवाम्बाधते व्वेति सूर्य्यमभिकृष्णेन रजसा द्यामृणोति ॥ किरीटहारकेयूररत्नकुण्डलमेखलाः । ग्रैवेयकौस्तुभोदाररत्नकङ्कणनूपुराः ॥ एवमन्यानि सर्वाणि भूषणानि रघूत्तम । अहं दास्यामि सद्भक्त्या गृहाण जगताम्पते ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः अलङ्करणानि समर्पयामि । अलङ्करणमुद्रां दर्शयेत् (मधुपर्की समुत्ताना मुद्रालङ्करणी स्मृता) ।

**रत्नमाल्यम्-** माणिक्यमुक्तामणिविद्रुमैश्च गोमेदपद्मारुणपुष्परागैः । देवेन्द्रनीलैश्च कृतं गृहाण गोरत्नवैदूर्य्ययुतं च हारम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः रत्नमाल्यं समर्पयामि ।

गन्धः- ॐ तँय्यज्ञम्बर्हिषि प्प्रौक्षन्पुरुषञ्जातमग्ग्रतः । तेन देवाऽअयजन्त साद्ध्याऽऋषयश्च्च ये ॥ प्रधानदेवनीयश्च सर्वमाङ्गल्यकर्मणि । श्रीराम गृह्यतां राजन् गन्धोऽयं मङ्गलप्रदः ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः गन्धं समर्पयामि । ततः कनिष्ठांगुष्ठाभ्यां गन्धमुद्रां प्रदर्शयेत् (वा- निर्मुक्तानामिकामुष्टिर्गन्धमुद्रा प्रकीर्तिता ।) ।

कुंकुमम्- कुंकुमागुरुकस्तूरीकर्पूरोन्मिश्रचन्दनम् । तुभ्यं दास्यामि विश्वेश श्रीराम स्वीकुरु प्रभो ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः कुंकुमं समर्पयामि ।

कज्जलम्- ॐ कनीनकश्च्चक्क्षुर्द्दा असि चक्क्षुर्म्मे देहि ॥ चाम्पेयकर्पूरकचन्दनादिकैर्नानाविधैर्गन्धचयैः सुवासितम् । नेत्राञ्जनार्थाय हरिन्मणिप्रभं सीतापते स्वीकुरु कज्जलं शुभम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः कज्जलं समर्पयामि ।

अक्षताः- (अक्षतेषु यवाः श्रेष्ठाः) ॐ अक्क्षन्नमीमदन्त ह्य्यवप्प्रिया अधूषत । अस्त्तोषत स्वभानवो व्विप्प्रा नविष्ठ्या मती योजा न्विन्द्र ते हरी ॥ अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण रघुनायक ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः अक्षतान् समर्पयामि ।

तुलसीमञ्जर्यादियुतं पुष्पमाल्यम्- ॐ यत्पुरुषँव्व्यदधुः कतिधा व्व्यकल्प्पयन् । मुखङ्किमस्यासीत्त्किम्बाहू किमूरू पादाऽउच्च्येते ॥ तुलसीकुन्दमन्दारजाती-पुन्नागचम्पकैः । कदम्बकरवीरैश्च कुसुमैः शतपत्रकैः ॥ नीलाम्बुजैर्बिल्वदलैः पुष्पमाल्यैश्च राघव । पूजयिष्याम्यहं भक्त्या संगृहाण जगत्पते ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः तुलसीमञ्जरीयुतं पुष्पमाल्यं समर्पयामि । ततस्तर्जन्यंगुष्ठयोगेन पुष्पमुद्रां प्रदर्शयेत् । (पुष्पं पत्रं फलं देवे न प्रदद्यादधोमुखम् ।)

सपुष्पतुलसीदलानि- जातीजपाचम्पकपङ्कजादिकैरन्यैश्च कालोद्भवपुष्पसंयुतैः । सम्पूजितस्त्वं तुलसीदलैरिह सीतापते मां दययाऽवलोकय ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः सपुष्पतुलसीदलानि समर्पयामि । पुष्पमुद्रां दर्शयेत् (उत्थिताऽधोमुखी मध्या बद्धांगुष्ठा यदीतरा । पुष्पमुद्रा समाख्याता पुष्पदानविवर्द्धिनी ॥) ।

दूर्वाकुराः- ॐ काण्डात्त्काण्डात्त्प्ररोहन्ती परुषः परुषस्प्परि । एवा नो दूर्व्वे प्प्रतनु सहस्स्रेण शतेन च ॥ दूर्वाकुरान् सुहरितानमृतान् मङ्गलप्रदान् । आनीतांस्तव पूजार्थं गृहाण जानकीपते ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः दूर्वाकुरान् समर्पयामि ।

नानापरिमलद्रव्यम्- ॐ अहिरिवभोगैः पर्य्येति बाहुञ्ज्यायाहेतिम्परिबाधमानः । हस्तघ्नो व्विश्श्वा व्वयुनानि व्विद्द्वान्पुमान्पुमाग्गुँसम्परिपातु व्विश्श्वतः ।। अबीरकं गुलालं च हरिद्राचूर्णमिश्रितम् । ससिन्दूरं गृहाण त्वं प्रसन्नो भव श्रीपते ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः नानापरिमलद्रव्यं समर्पयामि ।

सुगन्धिद्रव्यम्- ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्त्योर्मुक्षीय माऽमृतात् ।। दिव्यपुष्पसमुद्भूतं परानन्दकरं रसम् । सुगन्धं पुष्टिदं देव गृहाण जानकीपते ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः सुगन्धिद्रव्यं समर्पयामि ।

अङ्गपूजनम् । तुलसीदलैः कमलपुष्पैरन्यपुष्पैरन्यद्रव्यैर्युतं वा गन्धपात्रं वामहस्ते गृहीत्वा दक्षिणेन समर्चयेत्- श्रीरामभद्राय नमः पादौ पूजयामि । श्रीराजीवलोचनाय नमः गुल्फौ पूजयामि । श्रीरावणान्तकाय नमः जानुनी पूजयामि । श्रीविश्वरूपाय नमः जङ्घे पूजयामि । श्रीलक्ष्मणाग्रजाय नमः कटिं पूजयामि । श्रीविश्वमूर्तये नमः मेढ्रं पूजयामि । श्रीविश्वामित्रप्रियाय नमः नाभिं पूजयामि । श्रीपरमात्मने नमः हृदयं पूजयामि । श्रीश्रीकण्ठाय नमः कण्ठं पूजयामि । श्रीसर्वास्त्रधारिणे नमः बाहू पूजयामि ।।१०।। श्रीरघूद्वहाय नमः मुखं पूजयामि । श्रीपद्मनाभाय नमः जिह्वां पूजयामि । श्रीदामोदराय नमः दन्तान् पूजयामि । श्रीजलदवर्णाय नमः नासिकां पूजयामि । श्रीश्रुतिगोचराय नमः कर्णौ पूजयामि । श्रीपुण्डरीकाक्षाय नमः नेत्रे पूजयामि । श्रीसीतापतये नमः ललाटं पूजयामि । श्रीज्ञानगम्याय नमः शिरः पूजयामि । श्रीसर्वात्मने नमः सर्वाङ्गं पूजयामि ।।१९।। ॐ भूर्भुवः स्वः श्रीरामचन्द्राङ्गेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ।।

यथोक्तयन्त्राभावे पात्रे चन्दनादिना यन्त्रं विलिख्य 'ॐ श्रीरामपूजनयन्त्राय नमः' इति तन्त्रेण सम्पूज्याष्टोत्तरशतवारं दशवारं वा यन्त्रगायत्रीं पठेत्- ''ॐ यन्त्रराजाय विद्महे महायन्त्राय धीमहि । तन्नो यन्त्रः प्रचोदयात् ।।'' ततो यन्त्रे क्रमेणावरणदेवता आवाह्य पूजयेत् ।

महायन्त्रावरणपूजनम् । करसम्पुटौ कृत्वा भगवन्तं श्रीमद्रामचन्द्रं ध्यायेत्- मूले कल्पद्रुमस्याखिलमणिविलसद्रत्नसिंहासनस्थं कोदण्डद्वन्द्वबाणैर्ललितकरयुगेनार्पितं लक्ष्मणेन । वामाङ्कन्यस्तसीतं भरतधृतमहामौक्तिकच्छत्रकान्तिं शत्रुघ्नं चामराभ्यां विलसितमनिशं रामचन्द्रं भजेऽहम् ।। इति श्रीरामं ध्यात्वा श्रीरामवामभागे 'श्रीं सीतायै स्वाहा' इति तप्तकाञ्चनवर्णाभां सीतां सम्पूज्य त्रिकोणदक्षिणकोणाग्रे 'लं

लक्ष्मणाय नमः’ इति मन्त्रेण लक्ष्मणं पूजयेत् । ततस्त्रिकोणवामपार्श्वे ‘शां शार्ङ्गाय नमः’ इति शार्ङ्गधनुषं दक्षिणपार्श्वे च ‘शं शरेभ्यो नमः’ इति शरान् पूजयित्वाज्ञां याचेत् ।

ब्रह्मादिवन्द्य श्रीराम जगन्मङ्गलकारक । अनुज्ञां देहि मे देव परिवारार्चनाय ते ॥ इति बहिरङ्गपूजानुज्ञामादाय श्रीरामं सुप्रसन्नं विभाव्य यन्त्रे गन्धपुष्पैरावरणपूजां कुर्यात् । (श्रीरामपूर्वतापनीयोपनिषदादिषु क्रमवैविध्यं नामवैविध्यं च दृश्यते, तत्सर्वं प्रमाणमेव । मया त्वत्रोपनिषद्ब्रह्मयोगिभाष्यसंवलितश्रीरामरहस्योपनिषत्क्रममाश्रित्य श्रीराममहायन्त्रावरणपूजनं विलिख्यते ।)

**प्रथमावरणम्** । षट्कोणकेसरेषु वह्न्याशामारभ्य साङ्गं श्रीराघवं यजेत्- ॐ रां हृदयाय नमः । रीं शिरसे स्वाहा । रूं शिखायै वषट् । रैं कवचाय हुम् । रौं नेत्राभ्यां (नेत्रत्रयाय वा) वौषट् । रः अस्त्राय फट् ॥६॥ हस्तौ प्रक्षाल्य षट्कोणमध्ये ‘ॐ रां राघवाय नमः’ इति श्रीरामं सम्पूज्य दक्षिणहस्तांगुष्ठतर्जनीमध्यमांगुलिभिः पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ‘‘दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥’’ इत्युच्चार्य जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

**द्वितीयावरणम्** । अष्टदलमूलेऽग्निकोणात्- ॐ आं आत्मने नमः । यं परमात्मने नमः । विं विद्यायै नमः । सं ज्ञानात्मने नमः । मध्ये शां शान्त्यै नमः ॥५॥ इति सम्पूज्य पूर्ववत् पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ‘‘दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥’’ इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

**तृतीयावरणम्** । अष्टदलपत्राग्रेषु अग्निकोणादितः- ॐ वां वासुदेवाय नमः । श्रीं श्रियै नमः । सं सङ्कर्षणाय नमः । शां शान्त्यै नमः ॥४॥ प्रं प्रद्युम्नाय नमः । रं रत्यै नमः । अं अनिरुद्धाय नमः । प्रीं प्रीत्यै नमः ॥८॥ इति सम्पूज्य पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ‘‘दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥’’ इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

**चतुर्थावरणम्** । द्वितीयेऽष्टदलमूले- ॐ धृं धृष्ट्यै नमः । जं जयन्ताय नमः । विं विजयाय नमः । सुं सुराष्ट्राय नमः ॥४॥ रां राष्ट्रवर्द्धनाय नमः । अं अशोकाय नमः । धं धर्मपालाय नमः । सुं सुमन्त्राय नमः ॥८॥ इति सम्पूज्य पुष्पाञ्जलिं दत्वा

शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

पञ्चमावरणम् । अष्टदलपत्राग्रेषु- ॐ हं हनूमते नमः । सुं सुग्रीवाय नमः । भं भरताय नमः । विं विभीषणाय नमः ॥४॥ लं लक्ष्मणाय नमः । अं अङ्गदाय नमः । शं शत्रुघ्नाय नमः । जां जाम्बवते नमः ॥८॥ इति सम्पूज्य पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

षष्ठावरणम् । द्वादशदलेषु- ॐ वं वसिष्ठाय नमः । वां वामदेवाय नमः । जां जाबालये नमः । गौं गौतमाय नमः । भं भरद्वाजाय नमः । कौं कौशिकाय नमः ॥६॥ वां वाल्मीकये नमः । नां नारदाय नमः । सं सनकाय नमः । सं सनन्दनाय नमः । सं सनातनाय नमः । सं सनत्कुमाराय नमः ॥१२॥ इति सम्पूज्य पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं षष्ठावरणपूजनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

सप्तमावरणम् । षोडशदलेषु- ॐ नीं नीलाय नमः । नं नलाय नमः । सुं सुषेणाय नमः । मैं मैन्दाय नमः । शं शरभाय नमः । द्विं द्विविदाय नमः । चं चन्दनाय नमः । गं गवाक्षाय नमः ॥८॥ किं किरीटाय नमः । कुं कुण्डलाभ्यां नमः । श्रीं श्रीवत्साय नमः । कौं कौस्तुभाय नमः । शं शङ्खाय नमः । चं चक्राय नमः । गं गदायै नमः । पं पद्माय नमः ॥१६॥ इति सम्पूज्य पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

अष्टमावरणम् । द्वात्रिंशद्दलेषु- ॐ ध्रुं ध्रुवाय नमः । धं धराय नमः । सों सोमाय नमः । आं आपाय नमः । अं अनिलाय नमः । अं अनलाय नमः । प्रं प्रत्यूषाय नमः । प्रं प्रभासाय नमः ॥८॥ वीं वीरभद्राय नमः । शं शम्भवे नमः । गिं गिरीशाय नमः । अं अजैकपदे नमः । अं अहिर्बुध्न्याय नमः । पिं पिनाकिने नमः । भुं भुवनाधीश्वराय नमः । कं कपालिने नमः ॥१६॥ दिं दिक्पतये नमः । स्थां स्थाणवे नमः । भं भगाय नमः । वं वरुणाय नमः । सूं सूर्याय नमः । वें वेदाङ्गाय नमः । भां भानवे नमः । इं इन्द्राय नमः ॥२४॥ रं रवये नमः । गं गभस्तिने नमः । यं यमाय नमः । हिं हिरण्यरेतसे नमः । दिं दिवाकराय नमः । मिं मित्राय नमः । विं विष्णवे नमः । धां धात्रे नमः ॥३२॥ इति सम्पूज्य पुष्पाञ्जलिं

दत्वा शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यमष्टमावरणार्चनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

नवमावरणम् । द्वात्रिंशद्दलबाह्ये प्रथमभूपुराद्बहिर्मुख्यदिक्षु- ॐ लं इन्द्राय नमः । रं अग्नये नमः । यं यमाय नमः । क्षं निर्ऋतये नमः । वं वरुणाय नमः ॥५॥ यं वायवे नमः । सं सोमाय नमः । हं ईशानाय नमः । आं ब्रह्मणे नमः । ह्रीं शेषाय नमः ॥१०॥ इति सम्पूज्य पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

दशमावरणम् । नवमावरणार्चनक्रमेण द्वितीयभूपुरे- ॐ वं वज्राय नमः । शं शक्तये नमः । दं दण्डाय नमः । खं खड्गाय नमः । पां पाशाय नमः ॥५॥ ध्वं ध्वजाय नमः । गं गदायै नमः । त्रिं त्रिशूलाय नमः । अं अम्बुजाय नमः । चं चक्राय नमः ॥१०॥ इति सम्पूज्य पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं दशमावरणार्चनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ।

ततस्तृतीये भूगृहे- 'ॐ श्रीरामपार्षदेभ्यो नमः' इति सम्पूज्य पुष्पाञ्जलिं दत्वा शङ्खोदकमादाय ''दयाब्धे त्राहि संसारसर्प्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं सर्वावरणपूजनम् ॥'' इति जलं त्यक्त्वा धेनुमुद्रया प्रणमेत् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः सर्वावरणपूजनं समर्पयामि ॥

इत्यावरणदेवताः सम्पूज्य सपरिकरं श्रीरामचन्द्रं प्रणमेत्- वामे भूमिसुता पुरस्तु हनुमान् पश्चात्सुमित्रासुतः शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च । सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान् मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

ततो बहिर्नागेभ्यः पुष्पाञ्जलिं दत्वा मूलमनुं जपेत् ।

जलेन- अनेनावरणदेवतापूजनेन सपरिकरो भगवान् श्रीरामचन्द्रः प्रीयतां न मम ।

## श्रीरामचन्द्राष्टोत्तरशतनामपूजनम्

पुनर्हस्ते जलं गृहीत्वा सङ्कल्पयेत्- ॐ अद्य श्रीरामाष्टोत्तरशतनामभिः (श्रीरामसहस्रनामभिर्वा) तुलसीदलैः श्रीमद्रामचन्द्रपूजनं करिष्ये ।

ततः 'ॐ तुलस्यै नमः' इति तुलसीं सम्पूज्य 'महाप्रसादजननी सर्व्वसौभाग्यवर्द्धिनी । आधिव्याधिहरा नित्यं तुलसी त्वं नमोऽस्तु ते ॥' इति सम्प्रार्थ्य पुनर्ध्यात्वा भगवते श्रीरामचन्द्राय तुलसीदलान्यर्पयेत् ।

ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं
पीतं वासो वसानं नवकमलदलस्पर्द्धिनेत्रं प्रसन्नम् ।
वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभं
नानालङ्कारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रम् ॥

ॐ श्रीरामाय नमः (पूजयामि) । ॐ रामभद्राय नमः । ॐ रामचन्द्राय नमः । ॐ शाश्वताय नमः । ॐ राजीवलोचनाय नमः । ॐ श्रीमते नमः । ॐ राजेन्द्राय नमः । ॐ रघुपुङ्गवाय नमः । ॐ जानकीवल्लभाय नमः । ॐ जैत्राय नमः ॥१०॥ ॐ जितामित्राय नमः । ॐ जनार्दनाय नमः । ॐ विश्वामित्रप्रियाय नमः । ॐ दान्ताय नमः । ॐ शरणत्राणतत्पराय नमः । ॐ वालिप्रमथनाय नमः । ॐ वाग्मिने नमः । ॐ सत्यवाचे नमः । ॐ सत्यविक्रमाय नमः । ॐ सत्यव्रताय नमः ॥२०॥ ॐ व्रतधराय नमः । ॐ हनुमदाश्रिताय नमः । ॐ कौसल्येयाय नमः । ॐ खरध्वंसिने नमः । ॐ विराधवधपण्डिताय नमः । ॐ विभीषणपरित्रात्रे नमः । ॐ हरकोदण्डखण्डनाय नमः । ॐ सप्ततालप्रभेत्रे नमः । ॐ दशग्रीवशिरोहराय नमः । ॐ जामदग्न्यमहादर्पदलनाय नमः ॥३०॥ ॐ ताटकान्तकाय नमः । ॐ वेदान्तसाराय नमः । ॐ वेदात्मने नमः । ॐ भवरोगभेषजाय नमः । ॐ दूषणत्रिशिरोहन्त्रे नमः । ॐ त्रिमूर्त्तये नमः । ॐ त्रिगुणात्मकाय नमः । ॐ त्रिविक्रमाय नमः । ॐ त्रिलोकात्मने नमः । ॐ पुण्यचारित्रकीर्त्तनाय नमः ॥४०॥ ॐ त्रिलोकरक्षकाय नमः । ॐ धन्विने नमः । ॐ दण्डकारण्यकर्षणाय नमः । ॐ अहल्याशापशमनाय नमः । ॐ पितृभक्ताय नमः । ॐ वरप्रदाय नमः । ॐ जितेन्द्रियाय नमः । ॐ जितक्रोधाय नमः । ॐ जितावद्याय नमः । ॐ जगद्गुरवे नमः ॥५०॥ ॐ ऋक्षवानरसङ्घातिने नमः । ॐ चित्रकूटसमाश्रयाय नमः । ॐ जयन्तत्राणवरदाय नमः । ॐ सुमित्रापुत्रसेविताय नमः । ॐ सर्वदेवाधिदेवाय नमः । ॐ मृतवानरजीवनाय नमः । ॐ मायामारीचहन्त्रे नमः । ॐ महादेवाय नमः । ॐ महाभुजाय नमः । ॐ सर्वदेवस्तुताय नमः ॥६०॥ ॐ सौम्याय नमः । ॐ ब्रह्मण्याय नमः । ॐ मुनिसंस्तुताय नमः । ॐ महायोगिने नमः । ॐ महोदाराय नमः । ॐ सुग्रीवेप्सितराज्यदाय नमः । ॐ सर्वपुण्याधिकफलाय नमः । ॐ स्मृतसर्वाघनाशनाय नमः । ॐ आदिपुरुषाय नमः । ॐ परमपुरुषाय नमः ॥७०॥ ॐ महापुरुषाय नमः । ॐ पुण्योदयाय नमः । ॐ दयासाराय नमः । ॐ पुराणपुरुषोत्तमाय नमः । ॐ स्मितवक्त्रे नमः । ॐ मितभाषिणे नमः । ॐ पूर्वभाषिणे नमः । ॐ राघवाय नमः । ॐ अनन्तगुणगम्भीराय नमः । ॐ धीरोदात्तगुणोत्तमाय नमः ॥८०॥ ॐ मायामानुषचारित्राय नमः । ॐ

महादेवादिपूजिताय नमः । ॐ सेतुकृते नमः । ॐ जितवाराशये नमः । ॐ सर्वतीर्थमयाय नमः । ॐ हरये नमः । ॐ श्यामाङ्गाय नमः । ॐ सुन्दराय नमः । ॐ शूराय नमः । ॐ पीतवाससे नमः ॥९०॥ ॐ धनुर्धराय नमः । ॐ सर्वयज्ञाधिपाय नमः । ॐ यज्वने नमः । ॐ जरामरणवर्जिताय नमः । ॐ विभीषणप्रतिष्ठात्रे नमः । ॐ सर्वापगुणवर्जिताय नमः । ॐ परमात्मने नमः । ॐ परब्रह्मणे नमः । ॐ सच्चिदानन्दविग्रहाय नमः । ॐ परञ्ज्योतिषे नमः ॥१००॥ ॐ परन्धाम्ने नमः । ॐ पराकाशाय नमः । ॐ परात्पराय नमः । ॐ परेशाय नमः । ॐ पारगाय नमः । ॐ पाराय नमः । ॐ सर्वदेवात्मकाय नमः । ॐ परस्मै नमः ॥१०८॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः अष्टोत्तरशतनामभिः पूजनं समर्पयामि ॥

धूपः । एकस्मिन् धूपपात्रे धूमरहितमग्निं निधाय तन्निर्धूमाङ्गारपात्रं भगवत्पुरतो निधाय तस्मिन् गुग्गुलादिधूपद्रव्यं प्रक्षिप्य 'ॐ अस्त्राय फट्' इति मन्त्रेण सम्प्रोक्ष्य 'ॐ नमः' इति गन्धपुष्पैर्धूपं सम्पूज्य वामहस्ततर्जन्या धूपपात्रं स्पृष्ट्वा दक्षिणहस्तेन जलमादाय 'ॐ रां रामाय नमः' इति सबीजमूलमुच्चार्य धूपं विनिवेदयेत् । एवं धूपं विनिवेद्य 'ॐ ह्रीं जय जय ध्वनिमन्त्रमातः स्वाहा' इति घण्टां सम्पूज्य वामहस्ते गृहीत्वा वादयन् दक्षिणेन धूपमाघ्रापयेत्- ॐ ब्राह्म्मणोऽस्य मुखमासीद्द्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्श्यः पद्द्भ्यागँ्शूद्द्रोऽअजायत ॥ वनस्पतिरसैर्दिव्यैर्गन्धाढ्यैः सुमनोहरैः । रामचन्द्र महीपाल घूपोऽयं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः धूपमाघ्रापयामि । एवं धूपं निवेद्य देववामे धूपपात्रं निधाय दक्षिणहस्तेन शङ्खस्थजलं गृहीत्वा भूमौ क्षिप्त्वा मूलेन पुष्पाञ्जलिं दत्वा तर्जनीमूलयोरंगुष्ठयोगात्मिकां धूपमुद्रां प्रदर्शयेत् (अंगुष्ठतर्जनीलग्नास्तिस्रः सङ्कोचिताः पराः । मुद्रा धूपप्रदाने स्याद्देवतानां प्रिया सदा ॥) ।

दीपः- दीपपात्रं गोघृतेनापूर्य तस्मिन् विषमवर्तिं निःक्षिप्य मूलेन प्रज्वाल्य देवतादक्षिणभागे घण्टां वादयन् मन्त्रपाठपठनपुरःसरं दीपं दर्शयेत्- ॐ चन्द्द्रमा मनसो जातश्च्चक्षोः सूर्य्योऽअजायत । श्रोत्राद्द्वायुश्च्च प्प्राणश्च्च मुखादग्निरजायत ॥ ज्योतिषाम्पतये तुभ्यं नमो रामाय वेधसे । गृहाण दीपकं राजन् त्रैलोक्यतिमिरापह ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः दीपं दर्शयामि । नेत्रादिपादपर्यनतं पञ्चसप्तकृत्वो दीपं प्रदर्शयेत् । पुनः स्ववामे दीपं निधाय शङ्खजलमुत्सृज्य दक्षिणकरस्य मध्यमांगुष्ठमूलयोगेन दीपमुद्रां प्रदर्शयेत् (उत्ताना पौष्पिकी मुद्रा दीपमुद्रेति कीर्तिता) । हस्तद्वयप्रक्षालनम् ।

नैवेद्यम् । देवाग्रे सुसिक्तमण्डलोपरि मिष्ठान्नफलादिनैवेद्यं संस्थाप्य चक्रमुद्रया (हस्तौ तु सम्मुखौ कृत्वा सुलग्नौ सुप्रसारितौ । कनिष्ठांगुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिता ।।) सम्प्रोक्ष्य यमित्यर्कोच्चरितवायुबीजेन जातमारुतैर्नैवेद्यदोषं परिशोध्य तस्मिन् तुलसीपुष्पं प्रक्षिप्य धेनुमुद्रया अमृतीकृत्य प्रेम्णा विनिवेदयेत्- ॐ नाब्भ्याऽआसीदन्तरिक्क्षग्गूं शीर्ष्णो द्यौः समवर्त्तत । पद्द्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथा लोकाँ२।।ऽ अकल्प्पयन् ।। इदं दिव्यान्नममृतं रसैः षड्भिः समन्वितम् । श्रीराम राम राजेन्द्र नैवेद्यं प्रतिगृह्यताम् ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः नैवेद्यं निवेदयामि । पुनः 'ॐ अमृतोपस्तरणमसि स्वाहा' इति किञ्चिज्जलं दत्वा घण्टां वादयित्वा वामहस्तं पद्माकारं कृत्वा दक्षिणहस्तेन पञ्च ग्रासमुद्राः प्रदर्शयेत् । तत्र तर्जनीमध्यमांगुष्ठयोगेन 'ॐ प्राणाय स्वाहा', मध्यमानामिकांगुष्ठयोगेन 'ॐ अपानाय स्वाहा', कनिष्ठानामिकांगुष्ठयोगेन 'ॐ व्यानाय स्वाहा', तर्जनीकनिष्ठिकांगुष्ठयोगेन 'ॐ समानाय स्वाहा', सर्वांगुलिभिः 'ॐ उदानाय स्वाहा' चेति ग्रासान् दद्यात् । अनामिकांगुष्ठयोगेन नैवेद्यमुद्रां प्रदर्शयेत् (वा- पञ्चांगुल्यग्रसंलग्ना प्रोत्थितोर्ध्वमुखी यदि । त्रिधा निबद्धा मुद्रेयं नैवेद्ये परिकीर्तिता ।।) ।

आचमनम्- कर्पूरवासितं तोयं सुवर्णकलशस्थितम् । गृहाणाचमनं नाथ जानक्या सह राघव ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः आचमनं समर्पयामि । ततः 'ॐ अमृतापिधानमसि स्वाहा' इति पूर्वापोशानार्थे पानार्थे उत्तरापोशानार्थे च सुगन्धितजलं समर्पयेत् ।

नानाविधफलम्- ॐ याः फलिनीर्य्याऽअफलाऽअपुष्प्पा याश्च्च पुष्प्पिणीः । बृहस्प्पतिप्प्रसूतास्त्ता नो मुञ्चन्त्वग्गूंहसः ।। नानाविधफलं दिव्यं श्रीराम श्रद्धयार्पितम् । गृह्यतां प्रीणनार्थाय जगतां तृप्तिहेतवे ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः नानाविधफलं समर्पयामि ।। पुनराचमनीयं जलं समर्पयामि ।

करमुखोद्वर्तनार्थे सचन्दनजलम्- ॐ अग्गूंशुना तेऽअग्गूंशुः पृच्च्यताम्परुषा परुः । गन्धस्त्ते सोममवतु मदाय रसोऽअच्च्युतः ।। मलयाचलसम्भूतचन्दनं रजनीयुतम् । उद्वर्तनं मया दत्तं गृहाण जानकीपते ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः हस्तमुखप्रक्षालनार्थे सुगन्धिजलं समर्पयामि ।

ताम्बूलम्- ॐ यत्त्पुरुषेण हविषा देवा यज्ञमतन्वत । व्वसन्तोऽस्यासीदाज्ज्यं ग्रीष्ष्मऽइद्ध्मः शरद्धविः ।। नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम् । एलादिचूर्णसंयुक्तं ताम्बूलं राम गृह्यताम् ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः मुखवासताम्बूलं समर्पयामि ।

दक्षिणा- ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा व्विधेम ॥ दक्षिणां मैथिलीरूपां यज्ञरूप जगत्पते । सीतेश गृह्यतां प्रीत्या जगन्मङ्गलहेतवे ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः दक्षिणां समर्पयामि ।

छत्रम्- शशिप्रभं काञ्चनदण्डमण्डितं प्रवालमुक्तामणिविद्रुमावृतम् । प्रभो जगन्नाथ दयानिधे भवान् गृह्णातु छत्रं शिरसि प्रकल्पितम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः छत्रं समर्पयामि ।

चामरद्वयम्- श्वेतैः शरच्चन्द्रमयूखसन्निभैर्माणिक्यरत्नद्युतिदण्डमञ्जुलैः । प्रीत्या भवन्तं मनसा रमापते श्रीचामरैर्वै परिवीजयाम्यहम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः चामरं समर्पयामि ।

तालव्यजनम्- नक्षत्रराजेन्दुमरीचिशुभ्रैर्नक्षत्रपैलागरुवासितैश्च । नक्षत्रिणं राममहं भवन्तं श्रीतालवृन्तैः परिवीजयामि ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः तालव्यजनं समर्पयामि ।

दर्पणम्- कर्पूरकुन्देन्दुकरावदातं गोरत्नवैदूर्य्ययुतं मनोज्ञम् । प्रकल्पितं ते वदनाम्बुजाग्रे सीतापते स्वीकुरु दर्पणं शुभम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः स्वच्छदर्पणं समर्पयामि ।

पादुकाद्वयम्- मन्दारपुष्पाकरकान्तिसुन्दरं माणिक्यमुक्तामणिरत्नमण्डितम् । पादाम्बुजाग्रे मनसा प्रकल्पितं सीतापते स्वीकुरु पादुकाद्वयम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः पादुकाद्वयम् उपानद्द्वयं च समर्पयामि ॥

ततो ध्वजवितानधनुर्बाणपतद्ग्रहपादपीठमुकुटादीनि यथालब्धमहाराजलिङ्गानि समर्प्य यथेष्टं वेदस्मृतिरामायणपुराणस्तोत्रादिपठनं च समर्पयेत् ।

अथवैकतन्त्रेण महाराजोपचारान् समर्पयेत्- छत्रं सचामरं गीतं नृत्यं वाद्यं च दर्पणम् । व्यजनान्दोलने राम पादुके प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः राजोपचारान् समर्पयामि ॥

नीराजनम्- ॐ इदग्गूंहविः प्प्रजननम्मेऽअस्तु दशवीरग्गूं सर्व्वगणग्गुँस्वस्त्तये । आत्क्मसनि प्प्रजासनि पशुसनि लोकसन्न्यभयसनि । अग्निः प्प्रजाम्बहुलाम्मे करोत्त्वन्नम्पयो रेतोऽअस्म्मासु धत्त ॥ यश्चिन्तारत्नकल्पद्रुमविभवयुतां मण्डनं मण्डनानां सर्वासां सम्पदां यस्त्रिजगति जगतां मङ्गलं मङ्गलानाम् । हेमामत्रस्थदूर्वादधिमधुलवणैर्दृष्टिमुत्तार्य चार्यैर्नीराज्यो रामचन्द्रो

दिनकरकरजिद्दलदीपावलीभिः ॥ मङ्गलार्थं महीपाल नीराजनमिदं हरे । संगृहाण जगन्नाथ रामचन्द्र नमोऽस्तु ते ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः नीराजनं समर्पयामि ॥

सजलतुलसीयुतशङ्खं पञ्चवारं भगवदुपरि भ्रामयित्वा यथास्थानं स्थापयेल्लघुवस्त्रं च भ्रामयेत् । ततः पुष्पैर्भगवन्तं नीराज्य हस्ताभ्यां स्वयमपि गृह्णीयात् । हस्तौ प्रक्षाल्य शङ्खजलं स्वशिरसि उपस्थितजनोपरि च क्षिपेत् ।

प्रदक्षिणचतुष्टयम् । हस्ते फलमादाय प्रदक्षिणां कुर्यात्- ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञन्तन्वानाऽअबद्ध्नन्पुरुषम्पशुम् ॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति । तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः प्रदक्षिणचतुष्टयं समर्पयामि । भगवते फलं निवेदयेत् ।

पुष्पाञ्जलिः- ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् । ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः ॥ नानासुगन्धपुष्पाणि यथाकालोद्भवानि च । पुष्पाञ्जलिर्मया दत्तो गृहाण करुणानिधे ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ।

विशेषार्घ्यम्- नमस्ते जानकीनाथ रामचन्द्र महीपते । पूर्णानन्दैकरूपस्त्वं गृहाणार्घ्यं नमोऽस्तु ते ॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः विशेषार्घ्यं समर्पयामि ।

स्तुतिप्रार्थना- आपदामपहर्त्तारं दातारं सर्वसम्पदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥१॥ सीतां विदेहतनयां मैथिलीं परमेश्वरीम् । श्रीरामप्राणनाथां च भूयो भूयो नमाम्यहम् ॥२॥ नमो भगवते श्रीमद्रामाय परमात्मने । सर्वभूतान्तरस्थाय ससीताय नमो नमः ॥३॥ ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः स्तुतिप्रार्थनां समर्पयामि इति साष्टाङ्गं प्रणमेत् ।

ततो दशवारमधिकं वा ''ॐ रां रामाय नमः'' इति मन्त्रं ''ॐ दाशरथाय विद्महे सीतावल्लभाय धीमहि । तन्नो रामः प्रचोदयात् ॥ ॐ जनकनन्दिन्यै विद्महे रामवल्लभायै धीमहि । तन्नः सीता प्रचोदयात् ॥'' इति गायत्रीं च जपित्वा प्रणमेत्- ''नमो ब्रह्मण्यदेवाय रामायाकुण्ठवेधसे । उत्तमश्लोकधुर्याय न्यस्तदण्डार्पितांघ्रये ॥ इन्दीवरदलश्यामो रामो राजीवलोचनः । वर्त्तते मानसे यस्यास्तां सीतां प्रणमाम्यहम्

।।'' ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः श्रीरामषडक्षरमन्त्रजपं श्रीरामसीतागायत्रीमन्त्रजपं प्रणामं च समर्पयामि ।। इति श्रीरामराजोपचारपूजां समर्प्य आचार्यादीनां पूजनं विधायाशीर्वादं गृहीत्वा रामायणादिश्रवणभजनकीर्त्तनादिकं च कुर्यात् ।।

**अपराधक्षमापनम्-** अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः अपराधक्षमापनं समर्पयामि ।

**समर्पणम्-** साधु वाऽसाधु वा कर्म यद्यदाचरितं मया । तत्सर्वं कृपया राम गृहाणाराधनं मम ।। बुद्धिर्विकुण्ठिता नाथ समाप्ता मम युक्तयः । नान्यत्किञ्चिद्विजानामि त्वमेव शरणं मम ।। ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः यथोपचारपूजनमात्मानं च समर्पयामि ।

**पूर्णताप्रार्थना-** प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।। यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।। ॐ अच्युताय नमः । ॐ अच्युताय नमः । ॐ अच्युताय नमः । ॐ शिवाय नमः । इति ।।

**मङ्गलघोषणम्-** मङ्गलं कोसलेन्द्राय महनीयगुणात्मने । चक्रवर्त्तितनूजाय सार्व्वभौमाय मङ्गलम् ।। ब्रह्मादिदेववन्द्याय ब्रह्मण्याय महात्मने । जानकीप्राणनाथाय रघुनाथाय मङ्गलम् ।। देवर्षिपितृवन्द्यायै मैथिल्यै मङ्गलं श्रियै । श्रीरामप्राणनाथायै सीतादेव्यै सुमङ्गलम् ।। स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्ग्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ।। काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ।। अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः । अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ।। सर्वेषां मङ्गलं भूयात्सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ।। धर्मस्य विजयो भूयादधर्मस्य पराजयः । प्राणिनां मङ्गलं भूयाच्छं भूयाद्धेनुविप्रयोः ।। ॐ शान्तिः शान्तिः शान्तिः । ॐ भूर्भुवः स्वः भगवते श्रीरामचन्द्राय नमः मङ्गलघोषं समर्पयामि ।।

**हस्ते जलमादाय-** अनेन यथाज्ञानोपचारकृतेन पूजनेन श्रीमद्रामचन्द्रः प्रीयतां न मम ।।

## अथ श्रीरामषडक्षरमन्त्रपुरश्चरणप्रयोगः

रामायणमीमांसायामनुष्ठानप्रकाशेऽन्यत्रापि च ''ॐ रां रामाय नमः'' इति सप्रणवषडक्षरो मन्त्रः कथितः । तन्त्रसारेऽयं मन्त्रः षड्विध उक्तः । तथा च- ''स्वकामशक्तिवाग्लक्ष्मीताराद्यः पञ्चवर्णकः । षडक्षरः षड्विधः स्याच्चतुर्वर्गफलप्रदः ॥ ब्रह्मासम्मोहनः शक्तिर्दक्षिणामूर्त्तिरव्ययः । अगस्तिः श्रीशिवः प्रोक्तो मुनयोऽत्र क्रमादिमे ॥'' विनियोगः- अस्य मन्त्रस्य ब्रह्मा ऋषिर्गायत्री छन्दः श्रीरामो देवता सर्वेष्टसिद्धये जपे विनियोगः ॥ ऋष्यादिन्यासः- ॐ ब्रह्मऋषये नमः शिरसि । गायत्रीछन्दसे नमः मुखे । श्रीरामदेवतायै नमः हृदि ॥ करन्यासः- ॐ रां अंगुष्ठाभ्यां नमः । रीं तर्जनीभ्यां नमः । रूं मध्यमाभ्यां नमः । रैं अनामिकाभ्यां नमः । रौं कनिष्ठिकाभ्यां नमः । रः करतलकरपृष्ठाभ्यां नमः ॥ हृदयादिन्यासः- ॐ रां हृदयाय नमः । रीं शिरसे स्वाहा । रूं शिखायै वषट् । रैं कवचाय हुम् । रौं नेत्रत्रयाय वौषट् । रः अस्त्राय फट् ॥ मन्त्रन्यासः- ॐ रां नमः ब्रह्मरन्ध्रे । रां नमः भ्रुवोर्मध्ये । मां नमः हृदि । यं नमः नाभौ । नं नमः लिङ्गे । मं नमः पादयोः ॥ इति न्यासं कृत्वा ध्यायेत्- ''कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि । सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं पश्यन्तीं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥'' इति ध्यात्वा पूर्वोक्तपीठे द्वादशाक्षरे वैष्णवे पीठे वा पीठपूजां कृत्वा श्रीराममूर्त्यादौ पुष्पान्तैरुपचारैः सम्पूज्य पूर्वोक्तां संक्षिप्तां वा आवरणपूजां कुर्यात् । तद्यथा- ''संविन्मयः परो देवः परामृतरसप्रियः । अनुज्ञां देहि मे राम परिवारार्चनाय ते ॥'' इति पुष्पाञ्जलिदानानन्तरं प्रथमावरणपूजनमारभेत्- (श्रीरामवामपार्श्वे) ॐ श्रीं सीतायै नमः । (अग्रे) ॐ शार्ङ्गाय नमः । (दक्षपार्श्वे) ॐ शरेभ्यो नमः । ॐ चापाय नमः । 'ॐ प्रथमावरणदेवताभ्यो नमः' इति सम्पूज्य पुष्पाञ्जलिं दत्वा प्रणमेत् ॥ तद्बहिः केसरेषु अग्न्यादिकोणेषु मध्ये च द्वितीयावरणपूजनम्- ॐ रां हृदयाय नमः । रीं शिरसे स्वाहा । रूं शिखायै वषट् । ॐ रैं कवचाय हुम् । रः अस्त्राय फट् । 'ॐ द्वितीयावरणदेवताभ्यो नमः' इति सम्पूज्य पुष्पाञ्जलिं दत्वा प्रणमेत् ॥ ततोऽष्टदलेषु पूर्वादिदिक्षु तृतीयावरणपूजनम्- ॐ हं हनुमते नमः । सुं सुग्रीवाय नमः । भं भरताय नमः । विं विभीषणाय नमः । लं लक्ष्मणाय नमः । अं अङ्गदाय नमः । शं शत्रुघ्नाय नमः । जां जाम्बवते नमः । 'ॐ तृतीयावरणदेवताभ्यो नमः' इति सम्पूज्य पुष्पाञ्जलिं दत्वा प्रणमेत् ॥ ततोऽष्टदलाग्रेषु पूर्वादितश्चतुर्थावरणपूजनम्- ॐ धृं

धृष्टये नमः । जं जयन्ताय नमः । विं विजयाय नमः । सुं सुराष्ट्राय नमः । रां राष्ट्रवर्द्धनाय नमः । अं अशोकाय नमः । धं धर्म्मपालाय नमः । सुं सुमन्त्राय नमः । 'ॐ चतुर्थावरणदेवताभ्यो नमः' इति सम्पूज्य पुष्पाञ्जलिं दत्वा प्रणमेत् ॥ ततो भूपुरे पूर्वादिदिक्षु पञ्चमावरणपूजनम्- ॐ लं इन्द्राय नमः । रं अग्नये नमः । मं यमाय नमः । क्षं निर्ऋतये नमः । वं वरुणाय नमः । यं वायवे नमः । कुं कुबेराय नमः । हं ईशानाय नमः । आं ब्रह्मणे नमः । ह्रीं शेषाय नमः । 'ॐ पञ्चमावरणदेवताभ्यो नमः' इति सम्पूज्य पुष्पाञ्जलिं दत्वा प्रणमेत् ''अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं सर्वावरणपूजनम् ॥ सर्वावरणदेवताः पूजिताः सन्तु नमः ॥'' इत्यावरणपूजां विधाय धूपादिनीराजनान्तैरुपचारैः श्रीरामं समभ्यर्च्य ''रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥१॥ श्रीराम राम रघुनन्दन राम राम श्रीराम राम भरताग्रज राम राम । श्रीराम राम रणकर्कश राम राम श्रीराम राम शरणं भव राम राम ॥२॥ सर्वाश्रयं परमहंसगतिं प्रकाशं वेदान्तवेद्यमधुरस्मितहास्ययुक्तम् । श्रीजानकीप्रणयरागरसाभिषिक्तं रामं मनोहरमुखांघ्रियुगं प्रपद्ये ॥३॥'' इति स्तुत्वा (जपारम्भे च हृदयं जपान्ते कवचं पठेदित्येतद्द्वयं ग्रन्थान्ते द्रष्टव्यम्) षड्लक्षात्मकं जपं जपदशांशं होमं तर्पणं मार्जनं ब्राह्मणभोजनं च क्रमेण सम्पादयेत् ॥ (तथा च शारदातिलके- ''वर्णलक्षं जपेन्मन्त्रं तद्दशांशं सरोरुहैः । जुहुयादर्चिते वह्नौ ब्राह्मणान्भोजयेत्ततः ॥१॥ एवं पूजादिभिः सिद्धे मनौ कर्म्माणि साधयेत् । जातीप्रसूनैर्जुहुयाच्चन्दनाम्भःसमुक्षितैः ॥२॥ राज्यवश्याय कमलैर्धनधान्यादिसम्पदे । नीलोत्पलानां होमेन वशयेदखिलं जगत् ॥३॥ बिल्वप्रमाणैर्जुहुयादिन्दिरावाप्तये नरः । दूर्वाहोमेन दीर्घायुर्भवेन्मन्त्री निरामयः ॥४॥ रक्तोत्पलहुतान्मन्त्री धनमाप्नोति वाञ्छितम् । मेधाकामेन होतव्यं पालाशकुसुमैर्नवैः ॥५॥ तज्जप्तमम्भः प्रपिबेत्कविर्भवति वत्सरात् । तन्मन्त्रितान्नं भुञ्जीत महदारोग्यमाप्नुयात् ॥६॥) इति श्रीरामषडक्षरमन्त्रपुरश्चरणम् ॥

## श्रीरामदशाक्षरमन्त्रपुरश्चरणप्रयोगः

दशाक्षरो मन्त्रो यथा- ''ॐ जानकीवल्लभाय स्वाहा हुं'' इति । विनियोगः- अस्य मन्त्रस्य वसिष्ठ ऋषिर्विराट् छन्दः जानकीवल्लभो रामो देवता रां बीजं स्वाहा शक्तिः सर्वेष्टसिद्धये विनियोगः ॥ ऋष्यादिन्यासः- ॐ वसिष्ठऋषये नमः शिरसि ।१। विराट्छन्दसे नमः मुखे । रामदेवतायै नमः हृदि । रां बीजाय नमः गुह्ये । स्वाहाशक्तये नमः पादयोः ॥५॥ करन्यासः- ॐ क्लीं अंगुष्ठाभ्यां नमः । क्लीं तर्जनीभ्यां नमः । क्लीं मध्यमाभ्यां नमः । क्लीं अनामिकाभ्यां नमः । क्लीं कनिष्ठिकाभ्यां नमः ॥५॥ हृदयादिपञ्चाङ्गन्यासः- ॐ क्लीं हृदयाय नमः । क्लीं

शिरसे स्वाहा । क्लीं शिखायै वषट् । क्लीं कवचाय हुम् । क्लीं अस्त्राय फट् ॥५॥ ततो मन्त्रन्यासः- ॐ जां शिरसि । नं ललाटे । कीं भ्रुवोः । वं ताल्वोः । ल्लं कण्ठे ॥५॥ भां हृदि । यं नाभौ । स्वां ऊर्वोः । हां जानुनोः । हुं पादयोः ॥१०॥ इति न्यस्य ध्यायेत्- ''अयोध्यानगरे रम्ये रत्नसौन्दर्यमण्डपे । मन्दारपुष्पैराबद्धवितानतोरणाञ्चिते ॥१॥ सिंहासनसमारूढं पुष्पकोपरि राघवम् । रक्षोभिर्हरिभिर्देवैर्दिव्ययानगतैः शुभैः ॥२॥ संस्तूयमानमुनिभिः सर्वतः परिसेवितम् । सीतालंकृतवामाङ्गं लक्ष्मणेनोपशोभितम् ॥३॥ श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ॥'' इति ध्यात्वा पूर्वोक्तमन्त्रवत् पीठपूजादिकं कृत्वा जपं कुर्यात् । तथा च- ''ध्यायेद्देवं जपेन्मन्त्रं वर्णलक्षमनन्यधीः'' ॥ अन्यत्सर्वं पूर्ववदिति श्रीरामदशाक्षरमन्त्रपुरश्चरणम् । (श्रीरामरहस्योपनिषदि श्रीरामः कथयति- पुरश्चरणविधावशक्तो यो मम महोपनिषदं मम गीतां मन्नामसहस्रं मद्विश्वरूपं ममाष्टोत्तरशतं रामशताभिधानं नारदोक्तस्तवराजं हनूमत्प्रोक्तं मन्त्रराजात्मकस्तवं सीतास्तवं च रामषडक्षरीत्यादिभिर्मन्त्रैर्यो मां नित्यं स्तौति तत्सदृशो भवेन्न किं भवेन्न किमिति ॥)

## श्रीरामहृदयस्तोत्रम्

ततो रामः स्वयं प्राह हनूमन्तमुपस्थितम् । शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ॥१॥ आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् । जलाशये महाकाशस्तदवच्छिन्न एव च ॥२॥ प्रतिबिम्बाख्यमपरं दृश्यते त्रिविधं नभः । बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् ॥३॥ आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चितिः । साभासबुद्धेः कर्तृतवमविच्छिन्नेऽविकारिणि ॥४॥ साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथाऽबुधैः । आभासस्तु मृषा बुद्धिरविद्याकार्यमुच्यते ॥५॥ अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पतः । अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते ॥६॥ तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा । ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः ॥७॥ तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः । एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ॥८॥ मद्भक्तिविमुखानां हि शास्त्रगर्त्तेषु मुह्यताम् । न ज्ञानं न च मोक्षं स्यात्तेषां जन्मशतैरपि ॥९॥ इदं रहस्यं हृदयं ममात्मनो मयैव साक्षात्कथितं तवानघ । मद्भक्तिहीनाय शठाय न त्वया दातव्यमैन्द्रादपि राज्यतोऽधिकम् ॥१०॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे प्रथमसर्गे श्रीरामहृदयस्तोत्रम्।

## श्रीरामकवचस्तोत्रम्

अगस्तिरुवाच- आजानुबाहुमरविन्ददलायताक्षमाजन्मशुद्धरसहासमुखप्रसादम् । श्यामं गृहीतशरचापमुदाररूपं रामं सराममभिराममनुस्मरामि ॥१॥ शृणु वक्ष्याम्यहं

सर्व सुतीक्ष्ण मुनिसत्तम । श्रीरामकवचं पुण्यं सर्वकामप्रदायकम् ।।२।। अद्वैतानन्दचैतन्यशुद्धसत्त्वैकलक्षण: । बहिरन्त: सुतीक्ष्णात्र रामचन्द्र: प्रकाशते ।।३।। तत्त्वविद्यार्थिनो नित्यं रमन्ते चित्सुखात्मनि । इति रामपदेनासौ परब्रह्माभिधीयते ।।४।। जय रामेति यन्नाम कीर्तयन्नभिवर्णयेत् । सर्वपापैर्विनिर्मुक्तो याति विष्णो: परं पदम् ।।५।। श्रीरामेति परं मन्त्रं तदेव परमं पदम् । तदेव तारकं विद्धि जन्ममृत्युभयापहम् । श्रीरामेति वदन् ब्रह्मभावमाप्नोत्यसंशयम् ।।६।। अस्य श्रीरामकवचस्य अगस्त्यऋषि: अनुष्टुप्छन्द: सीतालक्ष्मणोपेत: श्रीरामचन्द्रो देवता श्रीरामचन्द्रप्रसादसिद्ध्यर्थे जपे विनियोग: ।

अथ ध्यानं प्रवक्ष्यामि सर्वाभीष्टफलप्रदम् । नीलजीमूतसङ्काशं विद्युद्वर्णाम्बरावृतम् ।।१।। कोमलाङ्गं विशालाक्षं युवानमतिसुन्दरम् । सीतासौमित्रिसहितं जटामुकुटधारिणम् ।।२।। सासितूणधनुर्बाणपाणिं दानवमर्द्दनम् । यदा चोरभये राजभये शत्रुभये तथा ।।३।। ध्यात्वा रघुपतिं युद्धे कालानलसमप्रभम् । चीरकृष्णाजिनधरं भस्मोद्धूलितविग्रहम् ।।४।। आकर्णाकृष्टसशरकोदण्डभुजमण्डितम् । रणे रिपून् रावणादीन् तीक्ष्णमार्गणवृष्टिभि: ।।५।। संहरन्तं महावीरमुग्रमैन्द्ररथस्थितम् । लक्ष्मणाद्यैर्महावीरैर्वृतं हनुमदादिभि: ।।६।। सुग्रीवाद्यैर्महावीरै: शैलवृक्षकरोद्यतै: । वेगात्करालहुङ्कारै: भुग्भुक्कारमहारवै: ।।७।। नदद्भि: परिवादद्भि: समरे रावणं प्रति । श्रीराम शत्रुसङ्घान् मे हन मर्द्दय खादय ।।८।। भूतप्रेतपिशाचादीन् श्रीरामाशु विनाशय । एवं ध्यात्वा जपेद्रामकवचं सिद्धिदायकम् ।।९।। सुतीक्ष्ण वज्रकवचं शृणु वक्ष्याम्यहं शुभम् । श्रीराम: पातु मे मूर्ध्नि पूर्वे च रघुवंशज: ।।१०।। दक्षिणे मे रघुवर: पश्चिमे पातु पावन: । उत्तरे मे रघुपतिर्भालं दशरथात्मज: ।।११।। भ्रुवोर्दूर्वादलश्यामस्तयोर्मध्ये जनार्द्दन: । श्रोत्रं मे पातु राजेन्द्रो दृशौ राजीवलोचन: ।।१२।। घ्राणं मे पातु राजर्षि: कण्ठं मे जानकीपति: । कर्णमूले खरध्वंसी भालं मे रघुवल्लभ: ।।१३।। जिह्वां मे वाक्पति: पातु दन्तवल्ल्यौ रघूत्तम: । ओष्ठौ श्रीरामचन्द्रो मे मुखं पातु परात्पर: ।।१४।। कण्ठं पातु जगद्वन्द्य: स्कन्धौ मे रावणान्तक: । धनुर्बाणधर: पातु भुजौ मे वालिमर्द्दन: ।।१५।। सर्वाण्यंगुलिपर्वाणि हस्तौ मे राक्षसान्तक: । वक्षो मे पातु काकुत्स्थ: पातु मे हृदयं हरि: ।।१६।। स्तनौ सीतापति: पातु पार्श्वे मे जगदीश्वर: । मध्यं मे पातु लक्ष्मीशो नाभिं मे रघुनायक: ।।१७।। कौसल्येय: कटिं पातु पृष्ठं दुर्गतिनाशन: । गुह्यं पातु हृषीकेश: सक्थिनी सत्यविक्रम: ।।१८।। ऊरू शार्ङ्गधर: पातु जानुनी हनुमत्प्रिय: । जङ्घे पातु जगद्व्यापी पादौ मे ताटिकान्तक: ।।१९।। सर्वाङ्गं पातु मे विष्णु: सर्वसन्धीननामय: ।

ज्ञानेन्द्रियाणि प्राणादीन् पातु मे मधुसूदनः ॥२०॥ पातु श्रीरामभद्रो मे शब्दादीन् विषयानपि । द्विपदादीनि भूतानि मत्सम्बन्धीनि यानि च ॥२१॥ जामदग्न्यमहादर्पदलनः पातु तानि मे । सौमित्रिपूर्वजः पातु वागादीनीन्द्रियाणि च ॥२२॥ रोमांकुराण्यशेषाणि पातु सुग्रीवराज्यदः । वाङ्मनोबुद्ध्यहङ्कारैर्ज्ञानाज्ञानकृतानि च ॥२३॥ जन्मान्तरकृतानीह पापानि विविधानि च । तानि सर्वाणि दग्ध्वाशु हरकोदण्डखण्डनः ॥२४॥ पातु मां सर्वतो रामः शार्ङ्गबाणधरः सदा । इति श्रीरामचन्द्रस्य कवचं वज्रसम्मितम् ॥२५॥ गुह्याद्गुह्यतमं दिव्यं सुतीक्ष्ण मुनिसत्तम । यः पठेच्छृणुयाद्वापि श्रावयेद्वा समाहितः ॥२६॥ स याति परमं स्थानं रामचन्द्रप्रसादतः । महापातकयुक्तो वा गोघ्नो वा भ्रूणहा तथा ॥२७॥ श्रीरामचन्द्रकवचपठनाच्छुद्धिमाप्नुयात् । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥२८॥ इति श्रीमदानन्दरामायणे मनोहरकाण्डे त्रयोदशसर्गे श्रीरामकवचस्तोत्रम् ।

## श्रीसीताकवचस्तोत्रम्

अगस्तिरुवाच- या सीतावनिसम्भवाथ मिथिलापालेन सवंर्द्धिता पद्माक्षावनिभुक्सुतानलगता या मातुलिङ्गोद्भवा । या रत्ने लयमागता जलनिधौ या वेदपारं गता लङ्कां सा मृगलोचना शशिमुखी मां पातु रामप्रिया ॥ अस्य श्रीसीताकवचस्तोत्रमन्त्रस्य अगस्तिर्ऋषिरनुष्टुप्छन्दः श्रीसीता देवता रामेति बीजं जनकजेति शक्तिरवनिजेति कीलकं पद्माक्षसुतेत्यस्त्रं मातुलिङ्गीति कवचं मूलकासुरघातिनीति मन्त्रः श्रीसीतारामचन्द्रप्रीत्यर्थं सकलकामनासिद्ध्यर्थं जपे विनियोगः ॥ करन्यासः- ॐ ह्रां सीतायै अंगुष्ठाभ्यां नमः । ह्रीं रमायै तर्जनीभ्यां नमः । ह्रूं जनकजायै मध्यमाभ्यां नमः । ह्रैं अवनिजायै अनामिकाभ्यां नमः । ह्रौं पद्माक्षसुतायै कनिष्ठिकाभ्यां नमः । ह्रः मातुलिङ्ग्यै करतलकरपृष्ठाभ्यां नमः ॥ हृदयादिन्यासः- ॐ ह्रां सीतायै हृदयाय नमः । ह्रीं रमायै शिरसे स्वाहा । ह्रूं जनकजायै शिखायै वषट् । ह्रैं अवनिजायै कवचाय हुम् । ह्रौं पद्माक्षसुतायै नेत्रत्रयाय वौषट् । ह्रः मातुलिङ्ग्यै अस्त्राय फट् ॥

सीतां कमलपत्राक्षीं विद्युत्पुञ्जसमप्रभाम् । द्विभुजां सुकुमाराङ्गीं पीतकौशेयवासिनीम् ॥१॥ सिंहासने रामचन्द्रवामभागस्थितां वराम् । नानालङ्कारसंयुक्तां कुण्डलद्वयधारिणीम् ॥२॥ चूडाकङ्कणकेयूररशनानूपुरान्विताम् । सीमन्ते रविचन्द्राभ्यां निटिले तिलकेन च ॥३॥ मयूराभरणेनापि घ्राणेऽतिशोभितां शुभाम् । हरिद्रां कज्जलं दिव्यं कुंकुमं कुसुमानि च ॥४॥ बिभ्रन्तीं सुरभिद्रव्यं

सुगन्धस्नेहमुत्तमम् । स्मिताननां गौरवर्णां मन्दारकुसुमं करे ॥५॥ बिभ्रन्तीमपरे हस्ते मातुलिङ्गमनुत्तमम् । रम्यवासां च बिम्बोष्ठीं चन्द्रवाहनलोचनाम् ॥६॥ कलानाथसमानास्यां कलकण्ठमनोरमाम् । मातुलिङ्गोद्भवां देवीं पद्माक्षदुहितां शुभाम् ॥७॥ मैथिलीं रामदयितां दासीभिः परिवीजिताम् । एवं ध्यात्वा जनकजां हेमकुम्भपयोधराम् ॥८॥ सीतायाः कवचं दिव्यं पठनीयं शुभावहम् ॥९॥

श्रीसीता पूर्वतः पातु दक्षिणेऽवतु जानकी । प्रतीच्यां पातु वैदेही पातूदीच्यां च मैथिली ॥१॥ अधः पातु मातुलिङ्गी ऊर्ध्वे पद्माक्षजाऽवतु । मध्येऽवनिसुता पातु सर्वतः पातु मां रमा ॥२॥ स्मितानना शिरः पातु पातु भालं नृपात्मजा । पद्माऽवतु भ्रुवोर्मध्ये मृगाक्षी नयनेऽवतु ॥३॥ कपोले कर्णमूले च पातु श्रीरामवल्लभा । नासाग्रं सात्त्विकी पातु पातु वक्त्रं तु राजसी ॥४॥ तामसी पातु मद्वाणीं पातु जिह्वां पतिव्रता । दन्तान्पातु महामाया चिबुकं कनकप्रभा ॥५॥ पातु कण्ठं सौम्यरूपा स्कन्धौ पातु सुरार्चिता । भुजौ पातु वरारोहा करौ कङ्कणमण्डिता ॥६॥ नखान् रक्तनखा पातु कुक्षौ पातु लघूदरा । वक्षः पातु रामपत्नी पार्श्वे रावणमोहिनी ॥७॥ पृष्ठदेशे वह्निगुप्ताऽवतु मां सर्वदैव हि । दिव्यप्रदा पातु नाभिं कटिं राक्षसमोहिनी ॥८॥ गुह्यं पातु रत्नगुप्ता लिङ्गं पातु हरिप्रिया । ऊरू रक्षतु रम्भोरू जानुनी प्रियभाषिणी ॥९॥ जङ्घे पातु सदा सुभ्रूः गुल्फौ चामरवीजिता । पादौ लवसुता पातु पात्वङ्गानि कुशाम्बिका ॥१०॥ पादांगुलीः सदा पातु मम नूपुरनिःस्वना । रोमाण्यवतु मे नित्यं पीतकौशेयवासिनी ॥११॥ रात्रौ पातु कालरूपा दिने दानैकतत्परा । सर्वकालेषु मां पातु मूलकासुरघातिनी ॥१२॥ एवं सुतीक्ष्ण सीतायाः कवचं ते मयेरितम् । इदं प्रातः समुत्थाय स्नात्वा नित्यं पठेत्तु यः ॥१३॥ जानकीं पूजयित्वा स सर्वान् कामानवाप्नुयात् । धनार्थी प्राप्नुयाद्द्रव्यं पुत्रार्थी पुत्रमाप्नुयात् ॥१४॥ स्त्रीकामार्थी शुभां नारीं सुखार्थी सौख्यमाप्नुयात् । अष्टवारं जपनीयं सीतायाः कवचं सदा ॥१५॥ अष्टभ्यो विप्रवर्येभ्यो नरः प्रीत्यार्पयेत्सदा । फलपुष्पादिकादीनि यानि यानि पृथक्पृथक् ॥१६॥ सीतायाः कवचं चेदं पुण्यं पातकनाशनम् । ये पठन्ति नरा भक्त्या ते धन्या मानवा भुवि ॥१७॥

इति श्रीमदानन्दरामायणे मनोहरकाण्डे चतुर्दशसर्गे श्रीसीताकवचस्तोत्रम् ।

## शुक्लयजुर्वेदीयप्रातर्भगसूक्तम्

हरिः ॐ प्रातरग्निम्प्रातरिन्द्रग्गूंहवामहे प्रातर्म्मित्रावरुणा प्रातरश्श्विना । प्रातर्ब्भगम्पूषणम्ब्रह्म्मणस्प्पतिम्प्रातः सोममुत रुद्द्रग्गूंहुवेम ॥१॥ प्रातर्ज्जितम्भगमुग्ग्रग्गूंहुवेम व्वयम्पुत्रमदितेर्य्यो व्विधर्त्ता ।

आद्ध्रशिच्चद्यम्मन्यमानस्तुरशिच्चद्द्राजा चिद्यम्भगम्भक्षीत्त्याह ॥२॥ भग प्प्रणेतर्ब्भग सत्त्यराधो भगेमान्धियमुदवा ददन्नः । भग प्प्र नो जनय गोभिरश्श्वैर्ब्भग प्र नृभिर्न्नृवन्तः स्याम ॥३॥ उतेदानीम्भगवन्तः स्यामोत प्रपित्त्वऽउत मद्ध्ध्येऽअह्नाम् । उतोदिता मघवन्त्सूर्य्यस्य व्वयन्देवानागुँसुमतौ स्याम ॥४॥ भगऽएव भगवाँ२॥ऽअस्तु देवास्तेन व्वयम्भगवन्तः स्याम । तन्त्वा भग सर्व्वऽइज्जोहवीति स नो भग पुरऽएता भवेह ॥५॥ समद्ध्ध्वरायोषसो नमन्त दधिक्क्रावेव शुचये पदाय । अर्व्वाचीनं व्वसुविदम्भगन्नो रथमिवाश्श्वा व्वाजिनऽआवहन्तु ॥६॥ अश्श्वावतीर्ग्गोमतीर्न्नऽउषासो व्वीरवतीः सदमुच्छन्तु भद्द्राः । घृतन्दुहाना व्विश्श्वतः प्प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥७॥ इति ॥

## श्रीरामप्रातःस्मरणम्

श्रीगणेशाय नमः । श्रीमन्मङ्गलमूर्त्तये नमः । श्रीसरस्वतीदेव्यै नमः । श्रीकालिकादेव्यै नमः ॥ ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेद्रघुनन्दनम् । रामरामेति रामेति तारकाख्यं शुभं परम् ॥ हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये । सीतारामाख्यपीयूषं पिब भक्त्या निरन्तरम् ॥ श्रीराम जय राम जय जय राम । श्रीराम जय राम जय जय राम ॥ सीताराम सीताराम सीताराम सीताराम सीताराम सीताराम ॥ प्रातः स्मरामि रघुनाथमृदुस्वभावं हास्यास्यपङ्कजविलोचनचारुसारम् । श्रीजानकीहृदयमन्दिरमोदमानं रामाभिधानमनिशं हरिमीशमीड्यम् ॥१॥ प्रातर्भजामि भवभीतिहरं भवेशं भक्तार्त्तिहं भुवनभास्वरभासिताङ्गम् । भान्वन्वयप्रकटभव्यभुजान्तरालं भाग्येशभावभरितं भवसिन्धुपोतम् ॥२॥ प्रातर्नमामि नररूपरमाविलासं देवर्षिसिद्धमुनिपूजितपादपद्मम् । रम्यातिरम्यरमणीयकिशोरवेषं रामं नृपेन्द्रमवधाधिपजानकीशम् ॥३॥ प्रातः श्रयामि मिथिलेशसुतेशरामं भ्रात्रादिभिर्वृतमशेषमनोहराङ्गम् । देवाङ्गनादिमिथिलातरुणीद्रवास्यं धर्मादिवेदपुरुषार्थफलप्रदाग्र्यम् ॥४॥ प्रातः पिबामि परमामृतरामनाम प्राणास्पदं भवभुजङ्गविषप्रणाशम् । दिव्यातिदिव्यरसनेष्टरसाद्वितीयं ब्रह्मेन्द्ररुद्रमुनिवृन्दसुसेव्यमानम् ॥५॥ गङ्गाधरकृतं रामप्रातःस्मरणपञ्चकम् । यः पठेत्प्रातरुत्थाय स सुखी भक्तिनाम्भवेत् ॥६॥ इति ॥

## श्रीरामसुप्रभातम्

हे रामचन्द्र जनपालक दीनबन्धो हे राक्षसान्ध चरणाश्रितकल्पवृक्ष । हे वेदवेद्य भरताग्रज रावणारे सीतापते कुरु विभो मम सुप्रभातम् ॥१॥ हे राम विश्वलयपालनसृष्टिकारिन् हे सर्ववित्सकलशक्तिविशिष्ट नाथ । हे दिव्यरूपजलधे खरदूषणारे सीतापते कुरु विभो मम सुप्रभातम् ॥२॥ हे दोषवर्ज्यगुणवारिनिधे दयालो हे शक्रशम्भुविधिवन्दितपादपद्म । हे रावणान्तक विभीषणराज्यदायिन् सीतापते कुरु विभो मम सुप्रभातम् ॥३॥ हे पद्मनेत्र सकलाश्रय दुःखहारिन् हे वायुपुत्रपरिसेवित सर्वसेव्य । हे सत्यसन्ध सकलप्रद शीलसिन्धो सीतापते कुरु विभो मम सुप्रभातम् ॥४॥ हे भक्तिलभ्य सुखदाभयद प्रपत्त्या हे सर्वमूल सकलेश्वर मोक्षदातः । हे पूर्णचन्द्रसदृशानन दिव्यदेहिन् सीतापते कुरु विभो मम सुप्रभातम् ॥५॥ इति ॥

## श्रीमैथिलीप्रातःस्मरणम्

प्रातः स्मरामि मिथिलेशमहीमखेशां देवर्षिपित्रसुरशेषमहेशवन्द्याम् । वैशाखशुक्लनवमीकुजपुष्यजातां रामप्रियां जनकजां प्रणतोऽस्मि नित्यम् ॥१॥ प्रातः स्मरामि वसुधातनुजामुखाब्जं हास्यश्रिया विलसितं सुविशालनेत्रम् । मञ्जुस्वनस्य जनकं जनमोदहेतुं बिम्बाधरं रुचिरकुण्डलरम्यगण्डम् ॥२॥ प्रातर्नमामि रघुनायकवल्लभायाः पद्मांकुशादिलसितं हि पदारविन्दम् । दिव्यं महामुनिमनोभ्रमराभिसेव्यं पापापहं सुखदमुक्तिकरं प्रणामात् ॥३॥ प्रातर्भजामि मिथिलेशसुताकराब्जं रक्तं सुरम्यविमलं शुचिकोमलं च । आपद्गताभयकरं भयदं भयानामालम्बनं च वरदं पदमाश्रितानाम् ॥४॥ प्रातः श्रयामि वसुधातनयां च दिव्यां विद्युल्लताद्युतिमतीं सुषमानिधानम् । दिव्यैर्विभूषणपटैः सुविभूषिताङ्गीं ध्येयामनुग्रहमयीं मुनिभिः सुमुक्त्यै ॥५॥ प्रातर्वदामि मिथिलेश्वरकन्यकायाः सीतेति नाम निखिलाघहरं जनानाम् । प्रेम्णा सकृच्च कथितं यमयातनाह्नमुक्तिप्रदं सकलसौख्यकरं पवित्रम् ॥६॥ इति ॥

## श्रीमिथिलाप्रातःस्मरणम्

प्रातः स्मरामि मिथिलां महनीयकीर्तिं योगेश्वरादिपरिसेवितधर्मपात्रीम् । न्यायादिशास्त्रजननीं श्रुतिशत्रुहन्त्रीं सीतापतिप्रियभुवं सकलार्थदात्रीम् ॥१॥ प्रातर्नमामि मिथिलेशसुतासवित्रीं माध्यन्दिनश्रुतिधरां मखकोटिधर्त्रीम् । देवासुरर्षिविबुधाधिपवन्द्यभर्त्रीं नित्यं श्रुतिस्मृतिविचारविशेषशास्त्रीम् ॥२॥ प्रातर्भजामि भजतां भयभञ्जिनीं त्वां भूयोधरां भगवतीं भवभूतिभूषाम् । भाग्येन कोऽपि लभते

मिथिलां शरीरी वेदागमादिविदितां प्रणतोऽस्मि नित्यम् ॥३॥ विश्वस्तुतमिथिलाया: प्रात:स्तवनमुत्तमम् । गङ्गाधरकृतं नित्यं य: पठेद्भाग्यवान्भवेत् ॥४॥ इति ॥

## श्रीहनुमत्प्रात:स्मरणम्

प्रात: स्मरामि हनुमत्तपनीयवर्णं दिव्याम्बरं कनककुण्डलहारभूषम् । वीरं प्रभञ्जनसुतं हरिमाञ्जनेयं श्रीरामभक्तमसुरासुरवन्द्यतेजम् ॥१॥ प्रातर्भजामि भवभीतिहरं भटाग्र्यं भद्रं भुजान्तरभृशं भुवि भासमानम् । भीमं विशालभुजदण्डशिवावतारं रामेष्टफाल्गुनसखं प्लवगेशमीड्यम् ॥२॥ प्रातर्नमामि नमनीयपदं स्मितास्यं सीतागवेषणपरं दशवक्त्रत्रासम् । श्रीरामसम्मदकरं भजतां वरिष्ठं भक्ताभयप्रदमशेषमलापहारम् ॥३॥ श्रीहनुमत्प्रात:स्तोत्रं गङ्गाधरविनिर्मितम् । य: पठेत्प्रातरुत्थाय सीतारामप्रियो भवेत् ॥४॥ इति ॥

## श्रीबालरामाष्टकस्तोत्रम्

सुरम्ये सरयूतीरेऽयोध्यायां नृपसद्मनि । चैत्रशुक्लनवम्याञ्च बालराममहं भजे ॥१॥ भूभारहरणार्थाय गोविप्राद्यवनाय च । यज्ञक्षीरसमुद्भूतं बालराममहं भजे ॥२॥ कौसल्याहृत्सरोजार्कं मात्राद्युत्सङ्गशोभितम् । वन्दे दशरथप्राणं राममर्भकरूपिणम् ॥३॥ विधुबिम्बार्जुनं दृष्ट्वा क्रीडार्थमुद्यतं हरिम् । नवनीतप्रियं रामं बालरूपमहं भजे ॥४॥ कन्दुकक्रीडनासक्तं काकानन्दविवर्द्धनम् । श्रीराममनिशं वन्दे बालरूपमनोहरम् ॥५॥ भोगरागादिवेलायां नृपाद्यावाहने सति । इतस्ततो गतं रामं बालरूपमहं भजे ॥६॥ तरुणारुणपद्माक्षिशोभनं चञ्चलम्मनम् । भ्रातृभि: सह खेलन्तं बालराममहं भजे ॥७॥ गेहे पुरे त्रिलोकेऽपि वितरन्तं महामुदम् । वसन्तं गोकुले ब्रह्म बालराममहं भजे ॥८॥ बालरामाष्टकस्तोत्रं गङ्गाधरविनिर्मितम् । य: पठेच्छ्रद्धया नित्यं स महाभाग्यवान् भवेत् ॥९॥ इति ॥

## श्रीरामजन्मभूमिस्तोत्रम्

दिव्यभूमावयोध्यायां यत्र जातो हरि: स्वयम् ।
सीतारामप्रियां नित्यां जन्मभूमिं नमाम्यहम् ॥

या महाशक्तिनारायणी मङ्गला या वराहोद्धृता ब्रह्मरुद्रार्चिता । या विदेहालये जानकीजन्मदा तां रामजन्मभूमिं भजे सर्वदा ॥१॥ या व्रजे कृष्णराधाप्रदा प्राणदा याऽस्ति सर्वेशहृत्संस्थिता भूतिदा । याऽस्ति विश्वम्भराऽम्बा जगत्पावनी तां रामजन्मभूमिं भजे सर्वदा ॥२॥ याऽखिलाधारभूताऽस्ति लोकाधिपा या जगत्पालनी या च सर्वसहा । याऽस्ति ब्रह्मेन्द्ररुद्रादिभिर्वन्दिता तां रामजन्मभूमिं भजे सर्वदा ॥३॥

वृक्षभूभृल्लतासिन्धुगङ्गादिभिर्भूषितेक्ष्वाकुभूपादिभिः सेविता । सर्वसस्या धरित्री रसा याऽचला तां रामजन्मभूमिं भजे सर्वदा ॥४॥ उत्तरे दिव्यसर्यूप्रवान्विता देववेदर्षिपित्रादिभिर्या नुता । रत्नगर्भा वरेण्या सुभाग्यप्रदा तां रामजन्मभूमिं भजे सर्वदा ॥५॥ श्रीमद्रामजन्मभूमिस्तोत्रं गङ्गाधरोदितम् । सीतारामप्रमोदार्थं पठेन्नित्यं तदाप्तये ॥६॥ इति ॥

## श्रीससीतरामप्रणामाष्टकम्

नमो भगवते श्रीमद्रामायाभयदायिने । सर्ववेदान्तवेद्याय ससीताय नमो नमः॥१॥ नमो भगवते श्रीमत्सीतेशाय परात्मने । बाह्यान्तःस्थाय सर्वेषां ससीताय नमो नमः ॥२॥
नमो भगवते श्रीमद्विष्णवे विश्वहेतवे । सर्वज्ञाय परेशाय ससीताय नमो नमः ॥३॥
नमो भगवते श्रीमद्रघुनाथाय शार्ङ्गिणे । सच्चिदानन्दरूपाय ससीताय नमो नमः ॥४॥
नमो भगवते श्रीमद्रामचन्द्राय चक्रिणे । कार्यकारणरूपाय ससीताय नमो नमः ॥५॥
नमो भगवते श्रीमद्वासुदेवाय विष्णवे । श्रेयोगुणसमुद्राय ससीताय नमो नमः ॥६॥
नमो भगवते श्रीमद्रामभद्राय वेधसे । सर्वभूतशरण्याय ससीताय नमो नमः ॥७॥
नमो भगवते श्रीमद्राघवायामितौजसे । ब्रह्मणे परिपूर्णाय ससीताय नमो नमः ॥८॥

इति श्रीवसिष्ठमहर्षिकृतं ससीतरामप्रणामाष्टकम् ।

॥ श्रीराम जय राम जय जय राम ॥

॥ श्रीमद्धरिहराभ्यान्नमः ॥